आपको कोल्हापुर के प्रधान चित्रदुर्गमठ में महन्त पदकाभार ग्रहण करना पड़ा। और उन्ही की आज्ञा से आपके देश से आनेवाले अध्ययनार्थी छात्रों को सर्व प्रकार की सुविधा प्रदान करने के हेतु आपने अपने स्वार्थ का सर्वथा परित्याग करते हुवे काशी में १६२६ में श्री जगद्गुरु ११०८ श्रीजयदेव गुरुघराजेन्द्र छात्रावास की स्थापना की। जिससे कि आपके परमपूज्यगुरुजी की स्थायी कीर्ति बनी रहे। जिसमें आपने छात्रों के लिये भोजन आदि की भी व्यवस्था पूर्ण रूप से की। उसके बाद १६३५ में इस परम्परा को अक्षुण्ण बनाये रखने के हेतु आपने पूज्यगुरुजी के आदेशानुसार ही चिरस्थायी निधि के संरक्षणार्थ एकट्रस्ट की स्थापना की। और वर्त्तमान काल में आप ही उसके अध्यक्ष हैं। तथा परमोदार भाव से उसका सुचारु संचालन भी कर रहे हैं। और आप ११०८ श्री जगद्गुरु 'जयदेव' मुरुघराजेन्द्र महास्वामी जी के अनन्यभक्त होने के नाते अपने को सर्वदा के लिये उनका ऋणी घोषित करते रहते हैं। मैं १०८ श्रीगुरु शान्त स्वामी जी के विषय में अधिक कहना सूर्य को दीपक दिखाना है, जब कि आपकी साकार कीर्ति काशी में वर्त्तमान है।

श्रीज्वाला प्रसाद गौड़ न्यायाचार्य
न्या० प्र० अ० संन्यासी कालेज
वाराणसी।

———






* श्री *

# वेदान्तसारः

अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रये ऽभीष्टसिद्धये ॥१॥
अर्थतोऽप्यद्वयानन्दानतीतद्वैतभानतः ।
गुरुनाराध्य वेदान्तसारं वक्ष्ये यथामति ॥२॥

वेदान्तो नाम उपनिषत् प्रमाणम् ॥ तदुपकारीणि शारीरकसूत्रादीनि च । अस्य वेदान्तप्रकरणत्वात्तदीयैरेवानुबन्धैस्तद्वत्तासिद्धे र्न ते पृथगालोचनीयाः ॥

सत्यानन्दस्वरूप को बारम्बार ध्यान करि ।
वेदान्तसार की हिन्दी करूँ गुरु को प्रणाम करि ॥

जो वाणी तथा मन का भी गोचर ( विषय ) नहीं हो सकता है तथा जो समस्त संसार का आधारभूत है, ऐसे सत्-चित्-आनन्द स्वरूप अखण्ड ( पूर्ण ) ब्रह्म का अपनी अभीष्ट ( निःश्रेयस आदि इच्छा विषयीभूत वस्तु ) की सिद्धि ( प्राप्ति ) के लिये ध्यान करता हूँ ।

नष्ट हो चुकी है द्वैतबुद्धि अर्थात् समस्त भेदभावशालिनी बुद्धि जिन्हों की ऐसे अद्वैत तथा आनन्दस्वरूप अद्वयानन्द नामक अपने गुरु जी की आराधना करके मैं ( सदानन्द ) अपनी बुद्ध्यनुसार 'वेदान्तसार' ग्रन्थ को बनाता हूँ ।

प्रमाणान्तरनिरपेक्ष-स्वतःसिद्धप्रमाणस्वरूप उपनिषद् वाक्यों को वेदान्त कहते हैं । तथा जिसमें जीव का यथार्थरूप से निरूपण किया गया हो ऐसे प्रमाणस्वरूप उपनिषदों के अनुकूल समर्थक शारीरक सूत्र और गीता आदि अध्यात्मशास्त्रों को भी वेदान्त कहते हैं । यह वेदान्तसार वेदान्त के अन्तर्गत होने के नाते वेदान्त के जो अनुबन्धचतुष्टय हैं अर्थात् वेदान्तशास्त्र के जो अधिकारी-विषय-सम्बन्ध-प्रयोजन हैं उन्हीं अनुबन्धों से यह ग्रन्थ भी अनुबन्ध वाला है अतः इसके अनुबन्धों का हमने पृथक् आलोचना नहीं किया ।

नत्वा सदाशिवं साम्बं ध्यायं ध्यायं गुरोः पदम् ।
मया विचिन्त्य वेदान्तसारो व्याख्यायते स्फुटम् ॥

इह खलु स्वप्रकाशरूपब्रह्मणो ब्रह्मानन्दरूपत्वे सन्दिह्यमानानां तज्जिज्ञासूनामनायासेन मूलाऽज्ञाननिवृत्तिपरमानन्दावाप्तये प्रकरणमारभमाणो निर्विघ्नपूर्वकं सत्समाप्तये इष्टदेवतानमस्कारात्मकं मंगलं शिष्यशिक्षायै ग्रन्थतोनिबध्नाति **अखण्डमिति** । अभीष्टसिद्धये आत्मानमाश्रये इत्यन्वयः । **अभीष्टस्य** निःश्रेयसः **सिद्धये** प्राप्तये आत्मानमेकत्वेन प्रतिपद्ये इति तदर्थः । किं भूतमात्मानमिति जिज्ञासायामाह । **अखण्डमिति** । सजातीयविजातीयस्वगतभेदशून्यमित्यर्थः । विशेषणान्तरमाह । **सच्चिदानन्दमिति** । सत्स्वरूपम्, चित्स्वरूपम्, आनन्दस्वरूपमित्यर्थः । इदमेव स्वरूपलक्षणम् । लक्षणान्तरमाह । **अवाङ्मनसगोचरमिति** । वाङ्मनश्चक्षुरिन्द्रियजन्यज्ञानाऽविषय इत्यर्थः । **यन्मनसा न मनुते यतोवाचोनिवर्तन्ते** इत्यादि श्रुतेः । आत्मनस्तटस्थलक्षणं विशेषणव्याजेनाह । **अखिलाधारमिति** । अखिलस्य चराचरप्रपञ्चस्य विवर्ताधिष्ठानमित्यर्थः । अथवाऽखिलस्य जगतः उत्पत्तिस्थितिलयकारणमित्यर्थः ॥१॥ **शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चने** तिस्मृत्यनुरोधेन गुरुनमस्कारपूर्वकं ग्रन्थाभिधेयं प्रतिजानीते । **अर्थत** इति न केवलं शब्दत इति भावः । अद्वयानन्दान् गुरूनाराध्य वेदान्तसारं यथामति वक्ष्ये इत्यन्वयः । अद्वयश्चासावानन्दश्च अद्वयानन्दस्तानद्वयानन्दान् । आदरार्थं बहुवचनम् । अत्र हेतुमाह । **अतीतद्वैतमानत** इति । निरस्तसमस्तभेदज्ञानत्वादित्यर्थः । वेदान्तानामुपनिषद्वाक्यजातानां मध्ये यत्सारं तं वेदान्तसारं यथामति वक्ष्ये इत्यर्थः ॥२॥ वेदान्तशब्दाभिधेयं प्रतिपादयति । **वेदान्तोनामेति** । उपनिषद् एव प्रमाणमित्युपपत्प्रमाणम् शारीरकसूत्रादीनि च वेदान्त इत्यर्थः । **अस्येति** । ग्रन्थस्येत्यर्थः । **वेदान्तप्रकरणत्वादिति** । वेदान्तप्रतिपाद्यैकदेशार्थप्रतिपादकत्वादित्यर्थः । **तदीयैरिति** । वेदान्तशास्त्रीयैरित्यर्थः । **तद्वत्तासिद्धेरिति** । अनुबन्धवत्तासिद्धेरित्यर्थः । **ते**—अनुबन्धाः । **पृथक्**—स्वातन्त्र्येण । **आलोचनीया** इति । प्रतिपादनीया इत्यर्थः

**तत्राऽनुबन्धो नाम अधिकारि-विषय-सम्बन्ध-प्रयोजनानि ।**

अधिकारी-विषय-सम्बन्ध-प्रयोजन—इन चार को अनुबन्ध कहते हैं।

---

वेदान्तशास्त्रे अनुबन्धाश्च **अथातोब्रह्मजिज्ञासेति** सूत्रेण दर्शिताः। तथाहि—अस्मिन् सूत्रे कर्तव्या इति पदमध्याहार्यम्। जिज्ञासापदस्य विचारे लक्षणा। तथा च ब्रह्मज्ञानाय विचारः कर्तव्य इति भावः। ब्रह्मज्ञानफलकश्च विचारोवेदान्तवाक्यविचार एव, वेदान्तवाक्यैरेवाऽखण्डाऽद्वितीयब्रह्मप्रतिपादनात्। ब्रह्मज्ञानं चाऽनर्थनिवर्त्तकम्। तथा चाऽ नर्थनिवर्तकब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्य इत्यर्थः संपन्नः। अथ शब्दश्चाऽऽनन्तर्यार्थः। तस्यैव चाऽऽनन्तर्यं वक्तव्यम्, यदनन्तरं वेदान्तवाक्यविचारेऽवश्यं प्रवृत्तिः, तादृशं च विवेकादिसाधनचतुष्टयम्, तदनन्तरमवश्यं तत्र प्रवृत्तेः। अतोऽथशब्देन साधनचतुष्टयसंपत्त्याऽऽनन्तर्यं लभ्यते। हेतुत्वमतःशब्देनोच्यते। तथा च यतोब्रह्मज्ञानमनर्थनिवर्तकमतःसाधनचतुष्टयसंपत्त्यनन्तरमनर्थनिवर्तकब्रह्मज्ञानाय वेदान्तवाक्यविचारोऽवश्यं कर्तव्य इति सूत्रार्थः फलितः। तथा चाऽ नुबन्धचतुष्टयं स्पष्टमेवेति। परन्तु वेदान्तशास्त्रीयविषयाद्यनभिज्ञानां प्रवृत्तये शास्त्रीयानुबन्धानाह। तत्रेति। वेदान्तशास्त्रे इत्यर्थः। पुरुषमनुबध्नाति स्वज्ञानेन प्रेरयतीत्यनुबन्धः, अधिकारिविषयप्रयोजनसंबन्धास्तादृशा इति भावः। उद्देशक्रमानुसारेणाऽधिकारिणं निरूपयति। **अधिकारीत्विति**। अधिकारी तु प्रमातेति संबन्धः। प्रमाता च जीवः। स चाऽन्तःकरणावच्छिन्नं चैतन्यम्। अत्र च प्रमातृशब्दः सदाचारयुक्तब्राह्मणक्षत्रियवैश्यपरः। अन्यदपि अधिकारिविशेषणमाह। **साधनचतुष्टयसंपन्न इति**। साधनानां चतुष्टयं साधनचतुष्टयं तेन सपन्न इति व्युत्पत्त्या वक्ष्यमाणसाधनचतुष्टयवानित्यर्थः। तथा च साधनचतुष्टयसंपत्तिरधिकारिविशेषणम्। ननु न साधनचतुष्टयसंपत्तिरधिकारिविशेषणम्, किन्तु मुमुक्षुत्वमात्रम्, कामाधिकारे कामनाया एवाऽधिकारनिमित्तत्वात्। किं च साधनचतुष्टयस्याऽधिकारिविशेषणतावादिनापि विवेकादेर्मुमुक्षाहेतुत्वमावश्यकम्, एवं च विवेकादीनां मुमुक्षाजननेनाऽन्यथासिद्धेर्नाधिकारिविशेषणत्वमितिचेन्न "शान्तोदान्त" इत्यादि श्रुत्या विवेकादेरपि अधिकारिविशेषणत्वात्, पुरुषविशेषणत्वेन श्रूयमाणत्वादिति ध्येयम्। साधनचतुष्टयसंपत्तौ हेतुमाह। **नितान्तनिर्मलस्वान्त इति**। नितान्तं अत्यन्तं निर्मलं

अधिकारी तु विधिवदधीतवेद-वेदांगत्वेनापाततोऽधिगताखिल-वेदार्थोऽस्मिञ्जन्मनि जन्मान्तरे वा काम्य-निषिद्धवर्जनपुरस्सरं-नित्य-नैमित्तिक-प्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तः साधनचतुष्टयसंपन्नः प्रमाता

प्रश्न—इस वेदान्तशास्त्र का अधिकारी कौन है। उत्तर—जिसने विधिवत् चारों वेदों (ऋक्, यजुः, साम और अथर्ववेद) का, एवं समस्त वेदांगों (शिक्षा-कल्प-व्याकरण-निरुक्त-छन्द तथा ज्योतिष) का अध्ययन कर, आपाततः (साधारणरूप से) समस्त वेद तथा वेदांगों के अर्थ को जान लिया है। तथा जो इस जन्म में अथवा जन्मान्तर में काम्य (सकाम) तथा शास्त्रनिषिद्ध कर्मों का परित्याग करके, नित्य-नैमित्तिक-प्रायश्चित्त तथा उपासना आदि कर्मों के अनुष्ठान के द्वारा निखिल-कल्मषों (पापों) का विनाश हो जाने के नाते अत्यन्त निर्मल (निष्पाप-विशुद्ध) हो गया है अन्तःकरण जिसका ऐसा नित्यानित्य-वस्तुविवेक इत्यादि वक्ष्यमाण साधन चतुष्टय से सम्पन्न जो प्रमाता है वही वेदान्तशास्त्र का अधिकारी है।

---

स्वच्छं स्वान्तं अन्तः करणं यस्य तथोक्त इति। अन्तःकरणशुद्धौ हेतुमाह। निर्गतनिखिलकल्मषतयेति। निखिलाश्च ते कल्मषाश्चेति निखिलकल्मषाः निर्गता निखिलकल्मषा यस्मादिति निर्गतनिखिलकल्मषः। तस्य भाव स्तत्ता तयेत्यर्थः। निरस्तनिःशेषकल्मषत्वेनेति यावत्। कल्मषपदं चात्र काम्यनिषिद्धकर्मजन्यसुकृतदुष्कृतपरम्। कल्मषनिवृत्तौ हेतुमाह। अस्मिन् जन्मनीत्यादिना। काम्यानि च निषिद्धानि च काम्यनिषिद्धानि तेषां वर्जनपुरः सरमिति व्युत्पत्तिः। "मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयो रित्यभियुक्तोक्तेरिति भावः। नित्येति। नित्यानि च नैमित्तिकानि च प्रायश्चित्तानि च उपासनानि चेति नित्यनैमित्तिक प्रायश्चित्तोपासनानि तेषामनुष्ठानं तेनेत्यर्थः। काम्यादिवर्जने नित्याद्यनुष्ठाने च हेतुमाह। अधिगतेति। अखिलश्चासौ वेदश्चेति अखिलवेदः, तस्यार्थोऽखिलवेदार्थः, अधिगतोऽखिलवेदार्थोयेन सः। अखिलवेदार्थज्ञाने सति निषिद्धे तावत्पापभयेन न प्रवर्त्तते, नापि काम्ये, तत्साध्यफलस्याऽनित्यत्वज्ञानात्। किन्तु अन्तःकरणशुद्ध्यर्थं नित्यादिष्वेव प्रवर्त्तते इति भावः। ननु

काम्यानि स्वर्गादीष्टसाधनानि ज्योतिष्टोमादीनि। निषिद्धानि नरकाद्यनिष्टसाधनानि ब्रह्महननादीनि। नित्यानि अकरणे प्रत्यवायसाधनानि सन्ध्यावन्दनादीनि। नैमित्तिकानि पुत्रजन्माद्यनु-

प्रश्न—पहिले कहे हुवे काम्य–निषिद्ध–नित्य–नैमित्तिक आदि कर्म कौन हैं, तथा उनका फल क्या है। उत्तर—स्वर्ग आदि इष्ट (अभिलषित) वस्तुओं की प्राप्ति के साधनभूत कर्मों को काम्य कर्म कहते हैं। जैसे ज्योतिष्टोम आदि याग। और नरक आदि अनिष्ट वस्तुवों की प्राप्ति के साधनभूत कर्मों को निषिद्ध कर्म कहते हैं. जैसे ब्रह्महत्या आदि। जो कर्म न किये जाने पर प्रत्यवाय (पाप) के साधन हैं उन्हें नित्यकर्म कहते हैं, जैसे सन्ध्या-वन्दन आदि। पुत्र आदि की उत्पत्ति का अनुबन्ध (सम्बन्ध) जिन कर्मों से हैं वे कर्म नैमित्तिक कर्म कहलाते

---

श्रवणादीनां वैयर्थ्यं, अखिलवेदार्थाधिगमे ब्रह्मणोऽप्यवगतत्वादित्यत आह। आपातत इति। इदमित्थमेवेत्यवधारणमन्तरेणेत्यर्थः। आपाततोज्ञानं संशयाऽविरोधिनिश्चयः। तथा च संशयनिरासार्थं श्रवणादौ प्रवृत्तिर्युक्तेति भावः। आपातनिश्चये हेतुमाह। अधीतेति। अधीतो वेदो वेदाङ्गानि च येन सोऽधीतवेदवेदाङ्गः, तस्य भावस्तत्त्वं तेन। विधिवदिति। विधिना तुल्यं विधिवत्। विध्युक्तप्रकारेणेत्यर्थः। प्रकारो ब्रह्मचर्यादिः अध्ययनं चाऽध्यापनविधिप्रयुक्तमिति प्राभाकराः। नेति वेदान्तिनः काम्यानीति। फलेच्छाधीनकृतिसाध्यत्वं काम्यत्वम्। स्वर्गादीति। आदिना पुत्रादीनां परिग्रहः। इष्टसाधनानीति। ज्योतिष्टोमेन स्वर्गकामोयजेतेतिश्रुतेः। ज्योतिष्टोमादीनि—आदिना काम्यपुत्रेष्ट्यादीनां परिग्रहः। अकर्तव्यतया श्रुतिविहितत्वं निषिद्धत्वम्। अनिष्टसाधनानीति। साधनंचाऽत्र न फलोपधानं विवक्षितम्, मानाभावात् एतेन "असति प्रायश्चित्ते" इति शेष इति प्रत्युक्तम्। प्रायश्चित्तदशायामपि ब्रह्महत्त्यादेरनिष्टसाधनत्वाऽनपायात्। अनुप्रेयान्याह। नित्यानीति। प्रत्यवायसाधनानीति। तत्त्वं चाऽकरणे प्रत्यवायजनकत्वम्। सन्ध्या वन्दनादीति। आदिना पञ्चमहायज्ञपरिग्रहः। नैमित्तिकानीति नैमित्तिकत्वं च निमित्तमुद्दिश्याऽवश्यकर्तव्यतया विहितत्वम्। जातेष्ट्यादीनीति। जातेष्टिश्च "वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते" इत्यादिना विहिता।

वन्धीनि जातेष्ट्यादीनि। प्रायश्चित्तानि पापक्षयमात्रसाधनानि चान्द्रायणादीनि। उपासनानि सगुणब्रह्मविषयकमानसव्यापार रूपाणि शाण्डिल्यविद्यादीनि।

हैं। जैसे जातेष्टियाग आदि कर्म। पापों के क्षयमात्र ( प्रक्षालनमात्र ) के लिये किये जाने वाले कर्मों को प्रायश्चित कहते हैं, जैसे चान्द्रायण आदि व्रत। सगुण ब्रह्म को लक्ष्य करके मन का जो व्यापार होता है, अर्थात् बाह्यवृत्तियोंवाले मन का निरोध करके और स्वयं समाहित होकर मन को जो सगुणब्रह्म की ओर लगाना उसे उपासनात्मक कर्म कहते हैं, जैसे शाण्डिल्य आदि विद्या। ( शाण्डिल्य विद्या नाम है कि शाण्डिल्य ऋषि से कही गयी जो विद्या वही शाण्डिल्य विद्या है। छांदोग्य उपनिषत् में शाण्डिल्य ऋषि ने "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इस श्रुति के द्वारा समस्त चर-अचर जगत् को ब्रह्मरूप सिद्ध किया। अतः इस चर-अचर जगत् तथा आत्मा की ब्रह्मरूप से भावना करनी चाहिये ऐसा प्रतिपादन किया है,

---

प्रायश्चित्तानीति। प्रायश्चित्तं च पापक्षयमात्रसाधनम् यत्तु प्रायश्चित्तस्य पापक्षयफलकत्वे तत्र प्रवृत्त्यनुपपत्तिः, पापक्षयस्याऽपुरुषार्थत्वात्, प्रायश्चित्तस्य पुरुषार्थाऽप्रयोजकत्वात्। पुरुषार्थो हि सुखं दुःखाभावो वा, न च पापक्षयस्यैतदन्यतरत्वमस्ति। किं च प्रायश्चित्तस्य पापक्षयफलकत्वे नित्य-प्रायश्चित्तयोरविशेषता स्यात्, अतोदुःखप्रागभाव एव फलम्। पापक्षयस्तु द्वारमिति। तन्न। पापस्य दुःखहेतुत्वेन द्वेष्यतया तन्निवृत्त्यर्थं प्रायश्चित्ते प्रवृत्तियुक्तैव। अन्यथा सुखसाधनेपि प्रवृत्ति र्न स्यात्। यदि च रागात्तत्र प्रवृत्तिः, तर्हि दुःखवत्तत्साधनेपि द्वेषात्तन्निवृत्त्यर्थं प्रायश्चित्तेपि प्रवृत्तिर्युक्तैव। न वा नित्यादिना प्रायश्चित्तस्याऽभेदः। अनिमित्ते विहितं नित्यम्, यथा संध्यावन्दनादिकम्। नियतनिमित्ते विहितं नैमित्तिकम्, तन्निमित्तमपि पापभिन्नं ग्राह्यम्। यथा पुत्रजन्मादिनिमित्तं जातेष्ट्यादि। प्रायश्चित्तं तु पापे निमित्ते विहितम्, यथा परस्त्रीकामः प्रायश्चित्तं कुर्यादित्यादि। तथा च नाऽभेदः। यच्चोक्तं दुःखप्रागभावः फलम् तन्न तथासति प्रायश्चित्तानन्तरं दुःखोत्पत्तिप्रसंगात्। प्रागभाववतः कार्यस्योत्पत्तिनिसंभात्। विजातीयप्रागभावकल्पने मानाभावात्, अतः सिद्धं

एतेषां बुद्धिशुद्धिः परमं प्रयोजनम्। उपासनानान्तु चित्तैकाग्रयम्। "तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति

इन नित्य-नैमित्तिक आदि कर्मों का बुद्धि ( अन्तःकरण ) की शुद्धि हो जाना ही परम प्रयोजन है और उपासनात्मक कर्मों का फल है चित्त की

---

पापक्षयमात्रसाधनं प्रायश्चितमिति ध्येयम्। उपासनानीति। सगुणब्रह्मविषयेति। तेन निदिध्यासनाद्भेदः, निर्गुणविषयनिदिध्यासनफलं तत्त्वज्ञानम्, न तु चित्तैकाग्रयम्, मानसव्यापाररूपाणीति। मनोव्यापार इत्यर्थः। स एव मननम्। तच्च क्रियारूपम्, न तु ज्ञानरूपमिति यावत्। शाण्डिल्यविद्यादीनीति। शाण्डिल्यऋषिणोक्ता विद्या शाण्डिल्यविद्या। आदिना दहरादिविद्यापरिग्रहः।

नित्यादीनां स्वरूपमुक्तमिदानीं निर्गतनिखिलकल्मषतयेति विवृणोति एतेषामिति। नित्यादीनामिति। आदिना नैमित्तिकप्रायश्चित्तयोः संग्रहः। बुद्धिशुद्धिरिति। चित्तशुद्धिरित्यर्थः। परमिति। आवश्यकमित्यर्थः। द्वारीभूतमिति यावत्। ननु मुख्यम्, विविदिषन्तीति श्रुतिविरोधात्। उपासनानान्त्विति अनुगतमिति शेषः। सगुणब्रह्मोपासनानामित्यर्थः। चित्तैकाग्रयमिति। परं प्रयोजनमित्यनेनाऽन्वयः। चित्तस्यानन्यवृत्तित्वं चित्तैकाग्रयम्। अत्रापि परमित्यस्य द्वारीभूतमित्यर्थः। देवलोकाद्यर्थत्वेन विहिते कर्मणि द्वारीभूतस्य चित्तैकाग्रयस्य मुख्यस्याभावात्। यद्धि यदुद्देशेन विहितम्, तत्तस्य मुख्यं फलम्। अन्यथा स्वर्गाद्युद्देशेन विहितस्य यागादेरपूर्वस्य मुख्यफलत्वापत्तेः। न च चित्तैकाग्रयोद्देशेनोपासनानि विहितानि, येन तस्य मुख्यत्वं स्यात्। तस्मादुपासनानां चित्तैकाग्रयं न मुख्यं फलम्, किन्त्वनुगतम्, देवलोकप्राप्तिश्च मुख्यं फलम्। एवं चाग्रेऽवान्तरफलमित्यस्य मुख्यफलमित्यर्थो बोध्यः। तमेतमिति ब्राह्मणा द्विजास्तमेतमौपनिषदं पुरुषं वेदानुवचनेन-वेदस्य मन्त्रब्राह्मणात्मकस्य अनु- पश्चाद् गुरूच्चारणानन्तरं वचनं- पठनं- नित्यस्वाध्यायलक्षणं तेन वेदानुवचनेन तथा यज्ञेनाऽन्तःकरणशुद्धिद्वारा विविदिषन्ति वेदितुमिच्छन्तीत्यर्थः।

यज्ञेन" इत्यादिश्रुतेः। "तपसा कल्मषं हन्ति" इत्यादिस्मृतेश्च। नित्यनैमित्तिकयोरुपासनानाञ्च अवान्तरफलं पितृलोक सत्यलोक प्राप्तिः। "कर्मणा पितृलोको विद्यया देवलोकः" इत्यादिश्रुतेः।

एकाग्रता। इस विषय में श्रुति प्रमाण है—"ब्राह्मण लोग वेदाध्ययन करके यज्ञ के द्वारा पहिले कही गयी इस ईश्वरस्वरूप आत्मा को जानना चाहते हैं" स्मृति भी प्रमाण है—"तप से सर्वथा कल्मष (पाप) का विनाश हो जाता है" मनुस्मृति-१२ अ० १०४ श्लोक।

नित्य-नैमित्तिक कर्मों का तथा उपासनारूप कर्मों का अवान्तर (प्रासङ्गिक) पितृलोक तथा सत्यलोक की प्राप्ति भी फल बृहदारण्यक उपनिषत् में श्रुति ने बतलाया है—"कर्म (नित्य-नैमित्तिक) से पितृलोक की प्राप्ति होती है" और विद्या (उपासना) से देवलोक (सत्यलोक) की प्राप्ति होती है।

---

अत्रेदं बोध्यम्। विविदिषन्तीत्यत्र वेदनोद्देशेन यज्ञादीनि विधीयन्ते, वेदनस्येच्छाविषयत्वेन प्रतीयमानत्वात्। यथाऽश्वेन जिगमिषतीत्यत्राऽश्वेनेति अश्वकरणकत्वस्य सन्प्रत्ययाभिहितेच्छाविषयीभूते गमने एवाऽन्वयस्तद्वदत्रापि सन्प्रत्ययाभिहितेच्छाविषयीभूते वेदने "विद्यायां" यज्ञेनेति यज्ञकरणकत्वस्याऽन्वयः। यदि च विद्यायां यज्ञकरणकत्वमनुपपन्नं, विद्याया नित्यत्वात् तदाप्यावश्यकी चित्तशुद्धिः, यावत्तां वेदनानुपपत्तेः एवं च वेदनोद्देशेन यज्ञानुष्ठानेऽवश्यं चित्तशुद्धिर्भवतीति मन्तव्यम्।

ननु यज्ञकरणकत्वं वेदनेऽनुपपन्नम्, तथा सति ज्ञानसामान्यसामग्र्यतिरिक्तयज्ञादिसाध्यत्वे वेदनस्य स्वतस्त्वव्याघातः। न च प्रमायाः स्वतस्त्वव्याघात इष्ट एव, सामान्यसामग्र्यतिरिक्तगुणजन्यत्वादिति वाच्यम्। गुणजन्यत्वे मानाभावात्। दोषाऽभावेन च न भ्रमत्वापत्तिः। भ्रमस्य दोषजन्यत्वं हि उभयवादिसिद्धम्, तदभावे सति सामान्यसामग्र्यैव प्रमोत्पत्तिसंभवे ऽतिरिक्तगुणजन्यत्वे मानाभावात्। गुणस्तु नोभयवादिसिद्धः। दोषाभावस्य तुच्छतया सिद्धान्ते तस्य कारणत्वाभावात्। तदुपलक्षितायाः सामान्यसामग्र्याः, भावरूपाया एव प्रमोत्पादकत्वात्। अतः प्रमाया ज्ञानसामान्यसामग्रीप्रयोज्यत्वात्स्वत्वमुपपन्नम्, तच्च यज्ञादिजन्यत्वेऽनुपपन्नेतिचेन्न। यज्ञादिजन्यत्वस्य श्रुतिसिद्धतया श्रुतिसिद्धयज्ञाद्यतिरिक्ताजन्यत्वे सति ज्ञानसामान्यसामग्रीजन्यत्वमेव स्वतस्त्वम्। वस्तुतो यज्ञादीनां वेदनप्रतिबन्धकनिवृत्तौ हेतुत्वम्, श्रवणादीनमिवासंभा-

साधनानि [१]नित्यानित्यवस्तुविवेकेहा[२]मुत्रफलभोगविराग-[३]शमदमादि-सम्पत्ति-[४]मुमुक्षुत्वानि। नित्यानित्यवस्तुविवेकस्तावद् ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेचनम्।

प्रश्न—साधनचतुष्टय कौन हैं। उत्तर—नित्य-अनित्य वस्तु का विवेक अर्थात् नित्य और अनित्य वस्तु का विचार ॥१॥ इस लोक तथा परलोक में फलों के भोग में विराग (इच्छा न करना) ॥२॥ शम-दम-उपरति-तितिक्षा-समाधान और श्रद्धा ये छः प्रकार की साधन संपत्ति ॥३॥ मुमुक्षुत्व (मोक्ष की इच्छा) ॥४॥ इन चारों को साधनचतुष्टय कहते हैं। प्रश्न—नित्य-अनित्य वस्तु का विवेक क्या चीज है। उत्तर—नित्य-अनित्य वस्तु विवेक यह चीज है कि संसार में एकमात्र ब्रह्म ही नित्य वस्तु है और सब उससे अतिरिक्त अनित्य है ॥१॥

---

यनानिवृत्तौ। अतोयुक्तं वेदनोद्देशेन कर्मणामनुष्ठानम्। यज्ञपदेन चात्र कर्ममान्यं विधीयते, नातोवाक्यभेद इति ध्येयम्। तपसेति। यज्ञे-नेत्यर्थः। उपासनानामिति। अत्र प्रायश्चित्तस्याऽवान्तरफलाभावात्त-स्याऽग्रहणम्। अवान्तरफलमिति। मुख्यं फलमित्यर्थः। पितृ-लोकप्राप्तिरिति। चन्द्रलोकप्राप्तिरित्यर्थः। कर्मणेति। अग्निहोत्रादि-कर्मणेत्यर्थः। तथा च केवलेनाऽग्निहोत्रादिकर्मणा पितृलोकोजेतव्यो न पुत्रेण नापि विद्यया, विद्यया परया देवलोकोजेतव्यो न पुत्रेण नापि कर्मणेत्यनुकृष्यते।

साधनचतुष्टयसंपन्नस्य प्रमातुरत्राधिकार इत्युक्तम्, तत्र साधनचतुष्टयमाह। साधनानीति। नित्याऽनित्यवस्तुविवेकश्च इहाऽमुत्रफलभोग-विरागश्च शमदमादिसंपत्तिश्च मुमुक्षुत्वं चेति द्वन्द्वः। वैराग्योपजीव्य त्वान्नित्यानित्यवस्तुविवेकस्य प्रथममुद्देशः। एवमिहाऽमुत्रफलभोगविरा-गादावपि हेतुहेतुमद्भावेन क्रमोद्रष्टव्यः। साधनचतुष्टयसंपत्तिश्चेयं न कायिकवाचिकेन्द्रियव्यापाररूपा, किन्तु मानसिकव्यापाररूपैवेति।

नित्यं चाऽनित्यं च नित्यानित्ये ते एव वस्तुनी इति नित्यावस्तुनी, तयोर्विवेक इति विग्रहः। नित्यमिति। ध्वंसाप्रतियोगीत्यर्थः। ब्रह्मैवे-त्येवकारव्यवच्छेद्यं स्पष्टयति। ततोन्यदिति। ब्रह्मणोऽन्यदित्यर्थः।

ऐहिकानां स्रक्-चन्दन-वनितादिविषयभोगानां कर्मजन्यतया अनित्यत्ववदामुष्मिकाणामप्यमृतादिविषयभोगानामनित्यतया तेभ्यो नितरां विरतिरिहामुत्रार्थफलभोगविरागः। शमादयस्तु शमदमोपरतितितिक्षासमाधानश्रद्धाख्याः।

प्रश्न—इह-अमुत्रफलभोग विराग क्या वस्तु है। उत्तर—इस लोक की स्रक् (माला) चन्दन-वनिता (स्त्री) आदि भोगविलास सम्बन्धी सभी सामग्री कर्मजन्य होने के नाते जैसे अनित्य है अर्थात् जो आज है वह कल नहीं है, वैसे ही आमुष्मिक (पारलौकिक) जप याग आदि के द्वारा प्राप्त होने वाले अमृत (स्वर्ग) आदि विषयभोग हैं वे भी अनित्य होने के नाते सब नश्वर हैं इस प्रकार निश्चय करके उनसे (ऐहिक तथा पारलौकिक विषयभोगों से) एक दम घृणा हो जाना ही—"इहामुत्रफलभोगविराग" है ॥२॥ प्रश्न-शम-दम आदि छः प्रकार की सम्पत्ति कौन २ है। उत्तर—शम—दम—उपरति-तितिक्षा-समाधान—श्रद्धा।

---

जगदिति यावत्। अनित्यं-ध्वंस प्रतियोगि। इति विवेचनम्। ब्रह्म नित्यं जगदनित्यमिति प्रत्ययः विवेक इति योजना। इह। एतल्लोके अमुत्र। परलोके। फलं-सुखं-तत्साधनंच। भोगः- तत्साक्षात्कारः। तत्र विरागः। विरक्तिरित्यर्थः। तदेव दर्शयति। ऐहिकानामिति। इह भवा ऐहिकास्तेषा मित्यर्थः। स्रक् चन्दनवनितादिविषयाणां तज्जन्यभोगानां चेत्यर्थः कर्मजन्यतयेति। कृषिसेवादिकर्मजन्यतयेत्यर्थः। अमुष्मिन् परलोके भवाः आमुष्मिकास्तेषामपीत्यर्थः। तेभ्यः—ऐहिकेभ्य आमुष्मिकेभ्यश्च। विरतिरिति। ऐहिकपारलौकिकफलेच्छाविरोधिचेतोवृत्तिविशेष इत्यर्थः। न तु तदिच्छाविरहः, तथाहि—विरहो यदि प्रागभावाऽत्यन्ताभावाऽन्योन्याभावाः, तदा तेषामनादित्वेनाऽनुष्ठेयत्वाऽभावः, अथ ध्वंसः, तर्हि कृतकस्य प्रध्वंसोऽयत्नसिद्ध एवेति विरक्ते विवेकसापेक्षता न स्यात्, सिद्धान्ते ध्वंसानंगीकाराच्च।

शमस्तावत् श्रवणादिव्यतिरिक्तविषयेभ्यो मनसोनिग्रहः। दमो बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्तनम्। निवर्त्तितानामेतेषां तद्व्यतिरिक्त विषयेभ्य उपरमणमुपरतिः। अथवा विहितानां कर्मणां विधिना परित्यागः। तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता। निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः समाधानम्। गुरु वेदान्तवाक्येषु विश्वासः श्रद्धा।

प्रश्न—शम किसे कहते हैं। उत्तर—आत्मसाक्षात्कार के साधनभूत श्रवण-मनन-निदिध्यासन से व्यतिरिक्त सांसारिक विषयों से एकदम मन हटा लेना ही 'शम' है। प्रश्न—'दम' किसे कहते हैं। उत्तर—आत्मसाक्षात्कार के साधन श्रवण-मनन आदि से अतिरिक्त सांसारिक विषयों से बाह्य ( चक्षुः आदि ) इन्द्रियों को एकदम हटा लेना ही 'दम' कहलाता है। प्रश्न—'उपरति' क्या है। उत्तर—ब्रह्मसाक्षात्कार के साधनभूत श्रवण बाह्य इन्द्रियाँ हैं उनके अच्छी प्रकार दमन को 'उपरति' कहते हैं।

अथवा शास्त्रों में विहित जो सन्ध्यावन्दन आदि नित्यनैमित्तिक कर्म हैं उनका संन्यास धारण करके शास्त्रीयविधि से जो परित्याग कर देना उसे 'उपरति' कहते हैं। ( संन्यास भी आत्मसाक्षात्कार का परमसाधन है )। प्रश्न—तितिक्षा क्या वस्तु है। उत्तर—शीत-उष्ण एवं इनसे उत्पन्न सुख-दुःख आदि को प्रसन्न मन से सहन कर लेना ही 'तितिक्षा' है। [ अभिप्राय यह है कि शीत-उष्ण-शरीर के धर्म हैं, और इनसे उत्पन्न होने वाले सुख-दु.ख आदि अन्तःकरण के धर्म हैं, परन्तु आत्मा से शीत-उष्ण का कोई सम्बन्ध नहीं है इस प्रकार विवेकज्ञान पूर्वक शीत तथा उष्ण को प्रसन्नम- नस्क होकर सहन करते जाना इसी को 'तितिक्षा' कहते हैं। ] प्रश्न—समाधान क्या वस्तु है। उत्तर—निगृहीत ( वशीभूत ) मन का श्रवण-मनन इत्यादि विषयों में तथा श्रवण-मनन इत्यादि के अनुकूल गुरुशुश्रूषा आदि विषयों में मन को त्याग देना ही 'समाधान' कहलाता है। गुरु तथा वेदान्त वाक्यों में जो विश्वास वही श्रद्धा वस्तु है। प्रश्न—

---

मनसोनिवृत्तिःशम इत्याह। शम स्तावदिति। श्रवणादीति। आदिना मनननिदिध्यासनयोःपरिग्रहः। निग्रहो निवर्त्तनम्। श्रवणादिष्वेव मनोवस्थापनमिति यावत् तद्व्यतिरिक्तेति। श्रवणादिव्यतिरिक्तेत्यर्थः। निवर्त्तनं

**मुमुक्षुत्वं-मोक्षेच्छा। एवंभूतः प्रमाता अधिकारी। "शान्तो दान्तः" इत्यादिश्रुतेः।**

मुमुक्षुत्व क्या वस्तु है। उत्तर—ज्ञानशक्ति के द्वारा अज्ञान तथा अज्ञान से उत्पन्न होनेवाली सांसारिक भावना को समूल नष्ट करके आत्मा की ठीक अपने स्वरूप में स्थिति हो जाना इसी को मोक्ष कहते हैं और मोक्ष की इच्छा 'मुमुक्षुत्व' है।

इस प्रकार इन चार प्रकार के साधनों से सम्पन्न जो प्रमाता है वही वेदान्तशास्त्र का अधिकारी। श्रुति भी प्रमाण है—"जो शान्त हो तथा जो इन्द्रियों का दमन अच्छी प्रकार कर चुका हो।"

---

परावर्त्तनम्। बाह्येन्द्रियोपरम इति यावत्। **निवर्त्तितानां** निवृत्तानाम्। एतेषां इन्द्रियाणाम्। **तद्व्यतिरिक्तेति**। श्रवणादिव्यतिरिक्तेत्यर्थः। **उपरमणम्**- निवर्त्तनम्। इन्द्रियनिग्रहे सति तेषां विषयेभ्योनिवर्त्तनमर्थं-सिद्धमित्यस्वरसादाह। **अथवेति**। **विहितानामिति**। श्रवणाद्यतिरिक्तानामिति शेषः। **विधिना**। **विहितमार्गेण**। आलस्यादिना कर्मत्यागस्य निषेधांदिति भावः। **परित्यागः** सन्यासइत्यर्थः। कर्त्तृत्वाद्यभिमान-शून्येन फलानभिसन्धानपूर्वककर्मणां करणं वा उपरतिः। **तितिक्षेति**। शीतोष्णादेर्द्वन्द्वस्य यत्सहनं तत्तितिक्षेत्यर्थः। **तदनुगुणविषये**। तदुपकारके। गुरुशुश्रुषादाविति यावत्। **समाधिरिति**। निरन्तरेण तच्चिन्तनमित्यर्थः। **विश्वास इति**। इदमित्थमेवेति निश्चयात्मिका बुद्धिरित्यर्थः। चतुर्थसाधनं स्पष्टयति। **मोक्षेच्छेति**। मोक्षोऽज्ञाननिवृत्तिः ब्रह्मात्मतादात्म्यं वा,। **तस्येच्छा**—अहं संसारबन्धान्मुक्तःस्यामित्याकारा। तादृशेच्छावत्वं मुमुक्षुत्वम्। **एवं भूतः**—उक्तसाधनचतुष्टय-संपन्नः। **अधिकारी** वेदान्ताधिकारी। विद्याधिकारिणः शमादिसाधनवत्वे श्रुतिं प्रमाणयति। **शान्तोदान्त इति**। प्रथमं दान्तः उपरतबाह्येन्द्रिय-व्यापारोऽनन्तरंशान्तः—अन्तःकरणतृष्णातोनिवृत्तः तत उपरतः— सर्वैषणा विनिर्मुक्तो विधिना त्यक्तसर्वकर्मा सन्यासी, तितिक्षुः शीतोष्णादिद्वन्द्व सहिष्णुः—समाहितः सम्यगात्मनि समवहितचित्तोभूत्वा आत्मन्येव—स्वेकार्यकारणसंघाते एवाऽऽत्मानं पश्यति साक्षात्करोति सर्वमात्मानमेव

तथा चोक्तम्—"प्रशान्तचित्ताय जितेन्द्रियाय च प्रहीणदोषाय यथोक्तकारिणे। गुणान्वितायानुगताय सर्वदा प्रदेयमेतत् सततं मुमुक्षवे" इति ॥

विषयो जीवब्रह्मैक्यं शुद्धचैतन्यं प्रमेयं, तत्रैव वेदान्तानां तात्पर्यात्। संबन्धस्तु तदैक्यप्रमेयस्य तत्प्रतिपादकोपनिषत्प्रमा-

उपदेश साहस्री में भी कहा है—प्रशान्तचित्ताय-इत्यादि—जो प्रशान्तचित्त हो, जो इन्द्रियों को अच्छी प्रकार अपने वश में कर चुका हो, तथा जो सांसारिक अज्ञानरूप दोष से सर्वथा विनिर्मुक्त हो अर्थात् अत्यन्त विशुद्ध अन्तःकरणवाला हो, और जो जैसा पहिले कह दिया है वैसा करने वाला हो अर्थात् काम्य-निषिद्ध कर्म वर्जनपुरस्सर-नित्य-नैमित्तिक-प्राय-श्चित्त-उपासना-आदि कर्मों के अनुष्ठान में संलग्न हो, एवं जो विवेक-वैराग्य-आदि गुणसंपन्न हो, जो सर्वथा गुरु के अनुगत हो अर्थात् सर्वथा गुरु की आज्ञा मानने वाला हो, ऐसे मुमुक्षु शिष्य को ही आत्मज्ञान का उपदेश करना चाहिये।

यहां तक अधिकारी का विवेचन करके आगे विषय-सम्बन्ध आदि अन्य तीनों अनुबन्धों का पृथक् २ विचार करते हैं—"विषयो जीवब्रह्मैक्यम्" इस ग्रन्थ से। जीव तथा-ब्रह्म का ऐक्यस्वरूप जो शुद्धचैतन्य वही वेदान्तसार का विषय है। इसी ऐक्यस्वरूप शुद्धचैतन्य के बोधन में वेदान्त वाक्यों का तात्पर्य है। (अभिप्राय यह है कि अविद्या के कारण जीव और ब्रह्म में आरोपित जो अल्पज्ञत्व तथा सर्वज्ञत्व विरोधी धर्म हैं उनको छोड़देने के पश्चात् शुद्धचैतन्य ही शेष रह जाता है यही जीव ब्रह्म की एकरूपता है, और इसी में समस्त वेदान्त वाक्यों

---

पश्यति न तद्व्यतिरिक्तं किमपीत्यर्थः श्रुतिवाक्यस्य। शान्तो दान्त उपरतस्तितिक्षुःसमाहितोभूत्वाऽऽत्मन्येवाऽऽत्मानंपश्येदिति काण्वाः। समाहित इत्यस्य स्थाने श्रद्धान्वितो भूत्वा इति माध्यन्दिनः। उभयशाखानुरोधेन शमादीनां षण्णां निर्देशः। उक्तंचेति। प्रशान्तं चित्तं यस्य स प्रशान्तचित्तः तस्मै। शान्तायेत्यर्थः। जितानि इन्द्रियाणि येन स जितेन्द्रियस्तस्मै। दान्तायेत्यर्थः। दोषाः रागादयस्ते प्रहीणा यस्य स तस्मै। अनेनोपरतिरुक्ता। यथोक्तं करोति तच्छील इति यथोक्तकारी तस्मै। काम्यनिषिद्धवर्जनपुरःसरं नित्यकर्मानुष्ठानवते इत्यर्थः। गुणैः विवेकवैराग्यतितिक्षासमाधानैर्युक्ताय। अनुगताय। गुरुसेवापराय। एवं भूताय मुमुक्षवे एतदात्मज्ञानं सततं देयमिति पद्यार्थः।

णस्य च बोध्यबोध भावः। प्रयोजनं तु तदैक्यप्रमेयगताऽज्ञान-निवृत्तिः स्वस्वरूपानन्दावाप्तिश्च, तरति शोकमात्मवित् इति श्रुतेः। ब्रह्मविद् ब्रह्मैव भवतीत्यादिश्रुतेश्च।

का तात्पर्य है। तथा वेदान्त से प्रतिपाद्य प्रमेयात्मक विषय भी यही है।) सम्बन्ध-जीव और ब्रह्म का ऐक्यस्वरूप जो विषय (प्रमेय) है, और उसके प्रतिपादक जो प्रमाणभूत उपनिषत् आदि वाक्य हैं उनका परस्पर बोध्यबोधक (प्रतिपाद्यप्रतिपादक) सम्बन्ध है। जीव और ब्रह्म का ऐक्यबोध्य है और उस ऐक्य के प्रतिपादक 'तत्त्वमसि' आदि महावाक्य बोधक हैं। प्रयोजन—ब्रह्मात्मैकत्व-रूप चिन्मात्रगत जो अज्ञान और अज्ञान से उत्पन्न होने वाले समस्त प्रपञ्च की निवृत्तिपूर्वक स्वस्वरूप (आत्मस्वरूप) को जान लेने से अखण्ड आनन्द की प्राप्ति ही वेदान्तशास्त्र का प्रयोजन है। इस विषय में श्रुति भी प्रमाण है कि "तरतिशोकमात्मवित्" "ब्रह्मविद्ब्रह्मैव भवति"।

---

अधिकारिणं निरूप्य विषयं दर्शयति। विषय इति। उच्यते इति शेषः। जीवश्च ब्रह्मचेति जीवब्रह्मणी तयोरैक्यं विषय इत्यर्थः। ननु भिन्नयोरपि ऐक्य-व्यवहारोदृश्यते, नीरक्षीरवदित्यत आह। शुद्धमिति। तत्वं च सर्वधर्मा-तीतत्वम्। प्रमेयमिति। स्वरूपतोऽप्रमासमानत्वेपि सच्चिदानन्दरूपतया ज्ञायमानत्वादिति भावः। तत्रैवेति। जीवब्रह्मैक्ये एवेत्यर्थः। तात्पर्या-दिति। उपक्रमोपसंहारादिभिर्ब्रह्मैव वेदान्तविषयो न प्रधानादिरिति भावः। तृतीयमनुबन्धं दर्शयति। सम्बन्धस्त्विति। तयो "जीवब्रह्मणो" रैक्यमिति तदैक्यम्, तदैक्यं च तत्प्रमेयं चेति तदैक्यप्रमेयं तस्येति विग्रहः। तत्प्रतिपादकेति। तदैक्यप्रतिपादकेत्यर्थः। तत्प्रतिपादकं च तदुपनिषत्प्रमाणं चेति तत्प्रतिपादकोपनिषत्प्रमाणं, तस्येति विग्रहः। ननु यतोवाचोनिवर्तन्ते इत्यादिश्रुतिविरोधात्कथं चैतन्यस्य बोध्यत्वमिति चेन्न। लक्षणावृत्त्या चैतन्यस्य बोध्यत्वादित्यग्रे व्यक्तीभविष्यति। चतुर्थ-मनुबन्धमाह। प्रयोजनं त्विति। प्रयोजनत्वं च प्रवृत्त्युद्देश्यत्वम्, तच्च यद्विषयकज्ञानजन्येच्छाविषयोयस्तत्त्वम्। लक्षणमिदं गौणमुख्य-प्रयोजनसाधारणम्। मुख्यप्रयोजनत्वं तु इतरेच्छानधीनेच्छाविषयत्वम्।

अयमधिकारी जननमरणादिसंसारानलसंतप्तो दीप्तशिरा जलराशिमिवोपहारपाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसृत्य तमनुसरति। "समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्यादिश्रुतेः। स

इस प्रकार यह वेदान्तसार का अधिकारी अपने ) आत्मा के स्वरूप को जानने का इच्छुक शिष्य इस जनन ( जन्म ) मरण ( रागद्वेष आदि ) रूप भयंकर संसाराग्नि से संतप्त होने के नाते जैसे भयानक गर्मी से अत्यन्त पीड़ित मनुष्य अपनी व्याकुलता को शान्त करने के लिये जलाशय के पास भागता हुआ जाता है। उसी प्रकार श्रोत्रिय ( वेदान्तशास्त्र के पारदर्शी ) ब्रह्मनिष्ठ ( ब्रह्मवेत्ता ) गुरु के पास तदनुकूल पत्र-पुष्प आदि उपहार ( भेंट ) लेकर जाता है और मनसा-वाचा-कर्मणा उन अपने गुरु की सेवा करता है। श्रुति है कि—समित्पाणि ( समिधा हाथ में लेकर ) शिष्य श्रोत्रिय-ब्रह्मनिष्ठ गुरु के पास जावे। अत्यन्त

---

गौणं नाम मुख्यस्य साधनं, तत्वं चेतरेच्छाधीनेच्छाविषयत्वम्। यथा-पाकादिकम्। तच्चैक्यंचेति तदैक्यं, तदेव प्रमेयं, तद्गतं तद्विषयकं यद-ज्ञानं तस्य निवृत्ति रितिविग्रहः। चिन्मात्रविषयकाऽज्ञाननिवृत्तिः प्रयोजन-मित्यर्थः। सैव मुक्तिरित्युच्यते। अथ अविद्यानिवृत्ति र्यदि चिद्रूपा, तत्व-ज्ञानेनचाऽविद्याऽत्यन्ताभावबोधमात्रं जन्यते तदा श्रवणादीनां वैयर्थ्यापत्तिः, चिद्रूपाऽविद्यानिवृत्ते र्नित्यत्वेवाऽप्रयोजनत्वात्, अत्यन्ताभावबोधस्य च सुखदुःखाभावान्यत्वेन ऽपुरुषार्थत्वादित्यतः प्रयोजनान्तरमाह। स्वस्व-रूपानन्दावाप्तिश्चेतिं। स्व-चैतन्यं तत्स्वरूपो य आनन्द स्तस्या ऽवाप्तिः प्राप्तिरित्यर्थः अज्ञाननिवृत्तिः श्रुत्यनुमोदितेत्याह। तरतीति। आक्रामतीत्यर्थः। शोकं शोकोपलक्षितमज्ञानम्। आत्मानं वेत्तीत्या-त्मवित्। आनन्दावाप्तौ श्रुतिं प्रमाणयति। ब्रह्मविदिति। अहं ब्रह्मा-स्मीति साक्षाज्जानाति स ब्रह्मवित्पुरुषः, ब्रह्मैव भवति ब्रह्मस्वरूप एव भवतीत्यर्थः। ब्रह्मैवेत्येवकारेण निरुपाधिक ब्रह्मत्वं सूचितम्। अनुबन्धच तुष्टयं दर्शयित्वा प्रकृतमनुसरति। अयमधिकारी। प्रमाता। स्वस्वरूप-जिज्ञासुरित्यर्थः। गुरुमनुसरतीत्यनेनान्वयः। जननमरणादीतिं। आदिना रागद्वेषादिपरिग्रहः। जननमरणादिरेव संसारः स एवाऽनलः तेन संतप्त

परमकृपया 'अध्यारोपापवाद' न्यायेनैनमुपदिशति । "तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इत्यादिश्रुतेः ॥

कृपालु वह गुरु "अध्यारोपापवाद" न्याय से ब्रह्मजिज्ञासु इस शिष्य को ब्रह्म का उपदेश करता है । इस विषय में श्रुति प्रमाण है—"पास में आये हुवे शिष्य को वह ब्रह्मवेत्ता गुरु जिस विद्या के द्वारा सच्चिदानन्दस्वरूप ब्रह्म का ज्ञान हो उस "ब्रह्मविद्या का उपदेश करे ।"

---

इत्यर्थः सन्तमस्यैव गुरुसमर्पणमित्यत्राह दृष्टान्तमाह । दीप्तशिरा इति । दीप्तं शिरो यस्येति स इतिविग्रहः । उपहारः पाणौ यस्य स उपहारपाणिः । रिक्तपाणिर्न पश्येच्च राजानं देवतां गुरूमिति वचनादिति भावः । गुरुमुपसृत्येति । गुरुसमीपं गत्वेत्यर्थः । अस्मिन्नर्थे श्रुतिमुदाहरति । समित्पाणिरिति । सम्पूर्णमंत्रस्तु

परीक्ष्य लोकान् कर्मचितान् ब्राह्मणोनिर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाऽभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । कर्मचितान्- कर्मणा संपादितान, लोकान् कर्मफलभूतान् भोग्यपदार्थान् परीक्ष्य-शास्त्रानुमानाभ्यामनित्यत्वेन निश्चित्य ब्राह्मणो निर्वेदमुक्तभोग्यपदार्थेभ्योवैराग्यं, आयात्- कुर्यात्-वैराग्यप्रकारंदर्शयति नास्तीति कृतकेन कार्यभूतेन कर्मणा अकृतः ब्रह्मस्वरूपोमोक्षो नास्ति-न भवति अतस्तद्विज्ञानार्थं सः जातवैराग्यः समित्पाणिः समित्प्र-भृत्युपायनहस्तः सन् गुरुमेव उपदेष्टारमेव गच्छेत् प्राप्यात् न तु स्वयं धीरत्वाभिमानं कुर्यात् । गुरुं विशिनष्टि श्रोत्रियं अधीतवेदवेदार्थं ब्रह्मणि निष्ठावन्तं ब्रह्मज्ञानिनमिति यावदित्यर्थः । स- गुरुः परमकृपया-करुणया- एनमुपदिशतीत्यन्वयः । उपदेशप्रकारमाह । अध्यारोपेति । अतस्मिन् तद्बुद्धिरारोपः अध्यारोपः । अपवादो नाशः स च कारणात्मनाऽवस्थानम् । यथा लोके गगनतत्त्वबोधनाय प्रवृत्तः कश्चित्प्रथमं नीलिमा-विशालताद्यध्यारोपोपेतं गगनं ग्राहयित्वा पश्चात् "नेदं वस्तुतोनैल्यादि-युक्तम्" इति बोधयति । तथा वेदान्ताअपि प्रथमं "यद् वियदादिसर्ग-

**असर्पभूतायां रज्जौ सर्पारोपवद् वस्तुन्यवस्त्वारोपोऽध्यारोपः।**

वस्तु में अवस्तु के आरोप ( भ्रम ) को अध्यारोप कहते हैं। जैसे वस्तुभूत

---

प्रलयकारणं सृष्ट्यादिवाक्यैः प्रतीयते तद् ब्रह्म" इति सर्गाद्यध्यारोपोपेतं ब्रह्म ग्राहयित्वा पश्चान्निषेधवाक्यैरध्यारोपितसर्गाद्यपवादेन निष्प्रपञ्चं ब्रह्मात्मैक्यं प्रतिपादयन्तीति भावः। यद्यपि "सर्वं खल्विदं ब्रह्म नेह नानास्ति किं च न" श्रुत्या ब्रह्मात्मैक्यप्रतिपत्तौ अपवादस्यैवोपयोगित्वं, तथापि अभावबुद्धौ प्रतियोगिज्ञानस्य कारणतया निषेध्यज्ञानार्थं अध्यारोपोप्यपेक्षितः इति अध्यारोपापवादयोर्ब्रह्मप्रतिपत्तौ प्रयोजकता। तत्र श्रुतिमाह। तस्मै इति। श्रुतिश्च

**तस्मै स विद्वानुपन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय येनाऽक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्।**

स गुरुः विद्वान् ब्रह्मवित् तस्मै उक्तशिष्याय सम्यगुपसन्नाय शास्त्रोक्तविधिना आगताय प्रशान्तचित्ताय दर्पादिदोषरहितचित्ताय शमान्विताय बाह्यान्तरिन्द्रियोपरमयुक्ताय तां वेदान्तप्रतिपाद्यां ब्रह्मात्मज्ञानं तत्त्वतो यथावत् प्रोवाच प्रब्रूयात्। येन यया ब्रह्मविद्यया अक्षरं अविनाशि पुरुषं सत्यं त्रिकालाऽबाध्यस्वरूपं वेद जानीयात् इत्यर्थः। अध्यारोपं सदृष्टान्तं लक्षयति। वस्तुनीति। अध्यारोपः—आरोपः—अध्यासः आपत्तिरिति पर्यायाः। अत्र दृष्टान्तमाह। असर्पभूतायामिति। सर्पभिन्नायामित्यर्थः। सर्पारोपवदिति। अनिर्वचनीयसर्पारोपवदित्यर्थः। न च देशान्तरीयसर्पभानं युज्यते, मानाभावात्। तथाहि—सति दोषविशेषे रज्जौ सर्पोभासते दोषे अपगते न भासते–प्रत्युत नास्ति सर्पः किन्तु रज्जुः, मिथ्यैवाऽभासीदित्यनुभवसिद्धम्। न हि ज्ञातस्य देशान्तरसत्वं भ्रमेण बाधेन वा विपर्यीक्रियते। अथ बाधान्यथानुपपत्त्या देशान्तरसत्वं कल्प्यते इति चेत्तर्हि बाधान्यथानुपपत्त्या अत्र प्रतिपन्नस्यैव बाधयोग्यं सत्वं कल्पनीयम्, न तु देशान्तरसत्वं अननुभवात्। न च बाधयोग्ये सत्वे कल्प्यमाने स्वाश्रयनिष्ठाऽत्यन्ताभावप्रतियोगित्वमक्लृप्तं कल्पनीयमिति

कल्पनीयमिति वाच्यम्। संयोगादौ दर्शनात् प्रकृतेपि बोध्यम्। किं च पुरोवर्तिनि मिथ्यासर्पे आवश्यकः, अवच्छेदकलाघवात्, परैर्हि विषयसाधकतावच्छेदकं प्रमानुभवत्वमुच्यते, तच्चाऽनुभवत्वापेक्षया गुरुभूतम्। अतोऽनुभव एव विषयसाधकः। स च प्रकृतेऽप्यस्तीत्यावश्यकोमिथ्यासर्पः।

ननु अनिर्वचनीयसर्पाङ्गीकारे रज्जौ सर्पोनास्तीति त्रैकालिकनिषेधप्रतीत्यनुपपत्तिः, सर्पाङ्गीकारादिति चेन्न। कालत्रयेपि सर्पोनास्तीति प्रतीतिः लौकिकपरमार्थदृष्टसर्पाभावविषयिणी, तस्य कदापि पुरोवर्त्तिन्यसत्वात्। वस्तुतो लौकिकपरमार्थत्वेन प्रतिभासमानरजताभाव एव तत्प्रतीतिविषयो, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोग्यधिकरणेपि स्वीकारात्। एतेन लौकिकपरमार्थदृष्टः सर्पः पुरोवर्तिनि प्रसक्तो न वा। आद्ये अन्यथाख्यातिः, अन्त्ये निषेधानुपपत्तिः, प्रसक्तस्यैव प्रतिषेधादिति निरस्तम्।

ननु तथापि भासमानसर्पविशेष्यकं लौकिकपरमार्थत्वप्रकारकं ज्ञानं न संभवति, तद्धि लौकिकपरमार्थत्वं देशान्तरीयमिह भासते, उताऽधिष्ठानसत्वप्रयुक्तमत्रत्यमेव। नाद्यः अन्यथाख्यात्यापत्तेः। अन्त्ये न व्यधिकरणधर्मावच्छिन्नाभावत्वं, अधिष्ठानसत्वप्रयुक्तस्य लौकिकपरमार्थत्वस्य भासमानसर्पनिष्ठत्वेन प्रतियोगितासमानाधिकरणत्वात्। तस्मात् "कालत्रयेपि सर्पोनास्तीति" प्रतीते र्न व्यधिकरणधर्मावच्छिन्नाभावविषयकत्वमिति चेत्—तर्हि कस्तादृशप्रतीतिविषय इति चेत्–सत्यम्–लौकिकपरमार्थदृष्टदेशान्तरीयसर्पाभाव एव विषयः। तस्य पुरोवर्त्तिन्यप्रसक्तत्वेन कथं निषेध इति चेत्—का साऽप्रसक्तिः। स्मरणाऽभाव एवाऽप्रसक्तिरिति चेत्—भवता तदभावः कथमत्राऽवधारितः। ननु आरोपाभाव एवाऽप्रसक्तिः, पुरोवर्त्तिनि अन्यथाख्यातिभिया देशान्तरीयसर्पस्याऽऽरोपाऽसंभवात् इति चेन्न। अभावबुद्धौ प्रतियोगिस्मरणं कारणम्, न तु प्रतियोग्यारोपः, प्रमाणाभावात्।

ननु यदि प्रतियोग्यारोपो न कारणम्, तदाऽत्यन्ताभावबोधसमयेऽन्योन्याभावोपि कथं न भासते, प्रतियोगिज्ञानसामग्र्यास्तुल्यत्वात्, आरोपस्य कारणत्वे तु अन्योन्याभावज्ञानजनकीभूततादात्म्याऽऽरोपाभावान्नाऽन्योन्याभावभानम् इति चेत्—सत्यम्। कथं न तादात्म्याऽऽरोप इत्यपि वक्तव्यम्। इच्छाभावादिति चेत्—इच्छाऽभावः कुतः, दैववशादिति चेत्, "तद्धेतोरेवास्तु तद्धेतुत्वं मध्ये किं तेन" इतिन्यायात्-

दैव एव कारणमस्तु तथा च दैववशात्कदाचिदत्यन्ताभावबोधः, कदाचिदन्योन्याभावबोध इत्युपपत्तौ आरोपेच्छाङ्गीकारे प्रमाणाभावात् । एवं च दैवादेवोपपत्तौ किमन्तर्गडुना ऽऽरोपेण । तस्मात्स्मर्यमाणसर्पाभावस्य त्रैकालिकनिषेधविषयत्वम् । भवतु वा ऽऽरोपः कारणम्, तस्य च कारणत्वं न समानप्रकारकारोपत्वेन, गौरवात्, किं तु आरोपत्वेन लाघवात्, पुरोवर्त्तिनि सर्पस्य सर्पत्वेन ज्ञानादारोपसंभवात् । तस्माल्लौकिकपरमार्थदृष्टदेशान्तरीयसर्पाभाव एव विषयस्त्रैकालिकनिषेधप्रतीतेः ।

अथैवमपि रज्जौ त्रैकालिकसर्पाभावप्रत्ययवत् "नेहनाना" इति श्रुत्या ऽअनिर्वचनीयसकलप्रपञ्चाभावश्चैतन्येऽ वगम्यते, तत्र का गति रिति चेत्—अत एव प्रपञ्चस्या ऽअनिर्वचनीयत्वम् । प्रपञ्चस्तु दृश्यते श्रुत्या च त्रैकालिकनिषेधोऽवगम्यते । तेनाऽनिर्वचनीयत्वम् । अनिर्वचनीयस्य स्वाभावसामानाधिकरण्यं न विरुद्धम् । अतो "नेहनाना" इति शास्त्रादवगम्यमानश्चैतन्ये त्रैकालिकप्रपञ्चाभावो न विरुद्धः ।

नन्वेवं पुरोवर्त्तिनि सर्पाभावोपि प्रपञ्चाभाववत् । त्रैकालिकनिषेधविषयोस्तु तस्याप्यनिर्वचनीयत्वादिति चेत् सत्यम् तस्यैवाऽभावोनिषेधविषयः ।

अत एव "प्रतिपन्नोपाधौ निषिध्यमानविषयत्वं मिथ्यात्वं" अनिर्वचनीयत्वमिति यावत् । इति **विवरणाचार्याः** । **प्रतिपन्नोपाधौ** स्वप्रकारकधीविशेष्याऽभिन्नेऽधिकरणे । **निषिध्यमानविषयत्वं** निषेधप्रतियोगित्वम् । तथा च स्वप्रकारकधीविशेष्यीभूताऽधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वं समुदितार्थः । स्वपदं मिथ्यात्वेनाऽभिमतपरम् । स्वपदग्राह्यसर्प [स्व] प्रकारिका या धीः "अयंसर्पः" इत्याकारिकाच तद्विशेष्यीभूतरज्जु"रूपाऽ"धिकरणवृत्तिर्योऽत्यन्ताभावः "रज्जौ सर्पोनास्ति-न भविष्यति नासीदित्याकारको त्यन्ताभावस्तत्प्रतियोगित्वं सर्पे । एवं द्वैतवद्ब्रह्म, सन्प्रपञ्चः इत्याकारकधीविशेष्यीभूतब्रह्मवृत्तिर्योऽत्यन्ताभावः "नेहनानास्तिकिंचने"तिश्रुतिबोधितप्रपञ्चाऽत्यन्ताभावस्तत्प्रतियोगित्वं प्रपंचे इति लक्षणसमन्वयः । इह ब्रह्मणि वृत्तित्वं सप्तम्यर्थः तन्नर्थोऽत्यन्ताभावः, नानापद-किंचनपदयोः प्रपञ्चपरत्वम् । तथा च ब्रह्मवृत्त्यत्यन्ताभावप्रतियोगी "प्रपञ्च" किंचननानापदबोध्य इति बोधः । एवं चाऽनिर्वचनीयसर्पाङ्गीकारे न निषेधप्रतीत्यनुपपत्तिः ।

अनिर्वचनीयप्रातिभासिकसर्पोत्पत्तौ अधिष्ठानसामान्यज्ञान-दोष-संस्काराणां कारणत्वम्। तथा हि रज्जौ "अयं सर्पः" इति भ्रमस्थले सर्पसंस्कारवतः पुंसः सदोषचक्षुषा रज्जुसम्बन्धे रज्जुत्वादिविशेषधर्मस्य रज्ज्ववयवानां च न भानम्, किन्तु इदन्त्वेन रज्ज्वाः सामान्यज्ञानम्। इदं च सामान्यज्ञानं दोषसहितेन चक्षुषा भवति अतः प्रमात्मकम्। इदमाकारवृत्त्यवच्छिन्नचैतन्यनिष्ठाऽविद्या (रज्ज्वज्ञानं) सर्पाकारेण ज्ञानाकारेण च परिणमते। इदमेव सर्पज्ञानं ज्ञानाभास इत्युच्यते। इदमाकारवृत्त्यउपहितचेतनः सर्पज्ञानस्याधिष्ठानम्। रज्ज्ववच्छिन्नचेतनः सर्पाधिष्ठानम्।

अथ सर्पाधिष्ठान-सर्पज्ञानाधिष्ठानयोर्भिन्नत्वे सर्पादीनामधिष्ठानज्ञानात्सर्पज्ञाननिवृत्तिर्न स्यात्, यतोऽधिष्ठानज्ञानादध्यस्तस्यैव निवृत्तिर्भवति अन्यथा सर्पाद्यधिष्ठानभूतरज्ज्वादिज्ञानादध्यस्तसंसारस्यैव निवृत्तिः स्यादतः सर्पसर्पज्ञानयोरधिष्ठानमेकमेव युक्तमिति चेन्न। यत्र उपाधिकृतो-वस्तुभेदोभवति तत्रोपाधिनिवृत्तौ वस्त्वभेदः यथाऽऽकाशस्य घटपटाद्युपाधिकृतोभेदो घटपटाद्युपाधिनिवृत्तावभेदः। एवं उपाध्योरेकदेशस्थत्वपि उपहितयोरभेदोभवति यथा मठाकाश-मठान्तर्वर्तिघटाकाशस्य। परन्तु धर्मिणोरैक्ये पि घटाकाशे घटोपहितत्वम्, मठाकाशे मठोपहितत्वं च धर्मद्वयम्। अत एवोपाधिकाले घटाकाशः मठाकाशः इति व्यवहारो भवति। प्रकृतेऽपि रज्ज्वादौ "एकदेशस्थत्वेन" वृत्त्युपहितविषयोपहित-चेतनयोरभेदः। एवमुपाधिसद्भावे वृत्त्युपहितत्वं विषयोपहितत्वं धर्मद्वयम्। तथा च विषयनिरूपिताऽधिष्ठानतावच्छेदकं रज्जूपहितत्वम्, सर्पज्ञान-निरूपिताधिष्ठानतावच्छेदकं "इदमाकार"वृत्त्युपहितत्वम्। एवं चोपहितयोरभेदेपि धर्मयोर्भेदः। वृत्त्युपहितत्वावच्छिन्नचेतननिष्ठाऽविद्या भ्रमस्योपादानं अधिष्ठानं च, विषयोपहितत्वावच्छिन्नचेतननिष्ठाऽविद्या भ्रमविषयीभूतसर्पस्योपादानम्, अधिष्ठानं च। स्वरूपत उपहितयोर-भेदादेकाधिष्ठानज्ञानाद् विषयज्ञानयोर्निवृत्तिरिति।

अत्रेदं तत्वम्। अज्ञानकृतमावरणं चेतने एव न तु जडपदार्थे तस्य जन्मान्धवत्स्वभावत एवाऽऽवृतत्वात्। एवं प्रमाणजन्यज्ञानीयविषय-तात्मकप्रमेयतापि चेतने एव जडपदार्थे आवरणप्रसक्तौ तन्निवृत्त्यर्थं प्रमेयता सम्भवेत्। अज्ञानविषयतायाश्चेतननिष्ठत्वेन अज्ञातता ज्ञातता प्रमेयत्वादयोधर्मास्तत्रैव। अतोऽधिष्ठानं चेतन एव, अध्यस्तास्तदति-

रिक्ताः। इयांस्तुविशेष ब्रह्मज्ञानीयविषयता शुद्धचेतने, घटादिज्ञानीयविषयता घटावच्छिन्नचेतने। अविद्याधिष्ठानं शुद्धचैतन्यम्, प्रपञ्चाधिष्ठानता अविद्यावच्छिन्नचेतने। प्रातिभासिकसर्परजताद्यधिष्ठानता रज्ज्ववच्छिन्नचेतने, शुक्त्यवच्छिन्नचेतने। अज्ञाततादयो धर्माः अवच्छेदकतासंबन्धेन शुक्तिरजतादौ वर्तन्ते इति शुक्त्यादौ अज्ञातताऽधिष्ठानादयो व्यवहारा उपपद्यन्ते इत्यन्यत्र विस्तरः।

अथाऽपरोक्ष प्रमातोऽ ज्ञाननिवृत्तिर्भवतीति सिद्धान्तः एवं चेद माकारवृत्तौ सत्यां इदमाकाराऽपरोक्षप्रमातोऽ ज्ञाननिवृत्तौ सत्यां, उपादानविरहात्कथमनिर्वचनीयसर्पादीनां तद्ज्ञानस्योत्पत्तिसंभव इति चेन्न। तादृशाऽपरोक्षज्ञानादिदमंशविषयकाऽज्ञाननिवृत्तिर्भवति। रज्जुत्वशुक्तित्वाद्यज्ञाननिवृत्तिर्न भवति, विशेषधर्माज्ञानमेवाऽ ध्यासहेतुः। यद्ज्ञानाद्यस्योत्पत्तिस्तद्ज्ञानादेव तस्य बाधः। अध्यासे इदन्त्वेन सामान्यतोऽ ज्ञानं नापेक्षितं प्रत्युत इदमाकाऽपरोक्षज्ञानमपेक्षितमस्ति। अधिष्ठानस्सामान्यज्ञानस्य चाऽध्यासहेतुत्वात्।

अथाऽनिर्वचनीयख्यातिवादिसिद्धान्तमते प्रातिभासिकसर्पोत्पत्तौ रज्ज्ववच्छिन्न"विषयोपहित" चैतन्यनिष्ठाऽविद्या उपादानकारणम्। अधिष्ठानसामान्यज्ञान-दोष-संस्काराणांनिमित्तकारणत्वम्। सर्पज्ञाने च इदमाकारवृत्त्युपहितचैतन्यनिष्ठमज्ञानं कारणम्, इति कारणद्वयकल्पने गौरवम्। अन्यथाख्यातिवादिनैयायिकनये सर्पज्ञाने "भ्रमे" एव कारणत्वं कल्पनीयमिति लाघवम्। सत्यम्। यथा नैयायिकनये इदं रजतमित्यादिभ्रमस्थले इदं पदार्थे रजतत्वं रजतत्वसमवायो वा प्रतीयते तथा तादात्म्येन रजतस्य रजततादात्म्यस्य वा प्रतीतिर्वाच्या अन्यथोत्तरकाले नात्र रजतत्वमित्येव बाधप्रतीति स्यात्, न तु नेदंरजतमिति प्रतीतिः। एवं च शुक्तौ रजततादात्म्यमप्रसिद्धमेवाऽतोऽ निर्वचनीयरजततादात्म्योत्पत्तिः स्वीकार्येति संक्षेपः।

अथ कथमवस्तुन आरोपः, क्वचिद्दृष्टपूर्वस्य सत एव क्वचिदारोपोदृष्टः। उच्यते। संस्कारजन्योहि भ्रमः तत्र पूर्वप्रतीतिमात्रमपेक्षते, न पुनः पूर्वप्रतीतस्य परमार्थसत्वमपि, तस्मात्पूर्वभ्रमदृष्टस्याप्युत्तरोत्तरारोपोपपत्तेः, भ्रमप्रवाहस्य चाऽनादित्वेनाऽ न्योन्याश्रयाऽनवस्थादिप्रसंगानवकाशात्। तथा च वस्तुनि परमार्थेऽ वस्तुनोऽ निर्वचनीयस्याऽऽ रोपइति युक्तमेव।

वस्तु सच्चिदानन्दानन्ताद्वयं ब्रह्म। अज्ञानादिसकलजडसमूहोऽवस्तु। अज्ञानं तु सदसद्भ्यां अनिर्वचनीयं त्रिगुणात्मकं

होने वाला सब जड़ पदार्थ नाशवान् होने के नाते अवस्तु है। प्रश्न—अज्ञान क्या पदार्थ है। उत्तर—अज्ञान सदसत् दोनों रूप से अनिर्वचनीय है अर्थात् न सत् है न असत् है, अर्थात् न उसका सत्त्वेन ( सत् रूप से ) निर्वचन हो सकता है। क्योंकि यदि अज्ञान सत् होता तो कभी भी उसका बाध न होता, परन्तु ब्रह्म साक्षात्कार हो जाने पर ब्रह्म के अतिरिक्त समस्त अज्ञानादि जड़ पदार्थों का बाध ( नाश ) हो जाता है। असत्त्वेन ( असद्रूप से ) भी अज्ञान रस्सी में अवस्तुभूत सर्प का भ्रम होना अध्यारोप कहलाता है। सत्-चित्-आनन्द स्वरूप अद्वय ( अद्वैत ) ब्रह्म को वस्तु कहते हैं। अज्ञान तथा अज्ञान से उत्पन्न का निर्वचन नहीं हो सकता है, क्योंकि असत् मानने पर वाह किसी का भासक नहीं हो सकता है कारण कि असत् वस्तु किसी का भी कारण नहीं हो सकती है जैसे शशशृङ्ग आदि। प्रश्न—अज्ञान यदि सदसद्भ्यां सर्वथा अनिर्वचनीय है तब तो उसकी सत्ता भी न सिद्ध हो सकेगी, सत्ताविहीन होने पर उसका स्वीकार

---

वस्तुस्वरूपमाह। वस्त्विति। ब्रह्मैव वस्तु इत्यन्वयः। अथ ब्रह्मण एव वस्तुत्वे जीवस्य शुक्त्यादेश्चाऽवस्तुत्वात्, कर्तृत्वाद्यध्यारोपे रजताद्यध्यारोपे चाऽव्याप्तिरिति चेत्-न-ब्रह्मण्येव जीवत्वस्यापि कल्पितत्वात्। कर्तृत्वादेश्च सोपाधिकभ्रमत्वेन उपाध्यनुरक्ते ब्रह्मण्येवाऽध्यारोपात्, एवं शुक्त्यवच्छिन्नचैतन्ये एव रजताऽऽरोपात्, शुक्त्यादेश्च रजताद्यधिष्ठानचैतन्याऽवच्छेदकतयाऽधिष्ठानत्वमुपचर्यते। न पुनस्तस्यैवाऽधिष्ठानत्वम्, अज्ञातं हि वस्तु आरोपाधिष्ठानं भवति। न च शुक्त्यादेरज्ञातत्वमस्ति, जडत्वात्। अज्ञानस्य तु चिन्मात्रनिष्ठत्वात् चिन्मात्रविषयत्वाच्च। तदुक्तम्।

यस्याऽज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेत्ति सः।
जडं न विद्यावेद्यत्वा ज्ञातोऽज्ञानं जड़ाश्रयम्॥

तस्मात्सुष्ठूक्तं वस्तु सच्चिदानन्दाऽद्वयं ब्रह्म, तस्मिन्नेवानतत्कार्याऽखिलजड़समूहस्याऽवस्तुनोऽध्यारोप इति। अवस्तुस्वरूपमाह। अज्ञानादीति। आदिनाऽऽकाशादिपरिग्रहः। अज्ञानमादिर्येषां तेऽज्ञानादयः-सकलाश्च ते जड़ाश्चेति सकलजड़ाः- अज्ञानादयश्च

ज्ञानविरोधि भावरूपं यत्किञ्चिदिति वदन्ति। अहमज्ञ इत्याद्यनुभवात्। "देवात्मशक्तिं स्वगुणैर्निगूढाम्" इत्यादिश्रुतेश्च॥

करना ही सर्वथा व्यर्थ है। उत्तर—वह त्रिगुणात्मक है अर्थात् सत्त्व-रजस्तमोगुणात्मक है और त्रिगुणात्मक कोई भी वस्तु सत्ताशून्य नहीं देखने में आती है अतः उसकी सत्ता आवश्यक है। वह अज्ञान ज्ञानविरोधी है, तथा भावरूप एवं यत्किञ्चित् स्वरूप है यही अज्ञान का लक्षण है। इस अज्ञान के विषय में अनुभव प्रमाण है-मैं अज्ञ हूँ अर्थात् मैं नहीं जानता हूँ इत्यादि। श्वेताश्वतर उपनिषत् में भी कहा है-"देव (प्रकाशस्वरूप) आत्मा की जो अज्ञानरूपा शक्ति वह अपने सत्त्व आदि गुणों से आच्छादित होकर रहती है।" इसी अज्ञान को माया अविद्या भी कहते हैं-अज्ञान के भेद तथा ईश्वर चैतन्य का निरूपण।

---

ते सकलजडाश्चेति अज्ञानसकलजडाःतेषां समूह इति व्युत्पत्तिः। अवस्त्विति। अनिर्वचनीयमित्यर्थः। अनिर्वचनीयत्वं च सदसद्भिन्नत्वम्। तदेवाह। अज्ञानं त्विति। यत्किंचिदिति वदन्तीत्यनेनाऽन्वयः। वृद्धा इति शेषः। अज्ञानं- अविद्या- प्रकृतिः- माया- शक्तिरित्यनर्थान्तरम्। एकदेशिमतेनाऽविद्यामाययोर्भेदः। अज्ञानस्य लक्षणमाह। सदसद्भ्यामनिर्वचनीयमिति। सदसद्भ्यामिति भावप्रधानोनिर्देशः। सत्वेनाऽसत्वेन च निर्वक्तुमशक्यमित्यर्थः। सदसद्विलक्षणमिति यावत्। अनादित्वे सतीत्यपि विशेषणीयम्, तेन कार्यीभूतप्रपंचस्यानिर्वचनीयत्वेपि नातिव्याप्तिः। ज्ञानविरोधीति। ज्ञानप्रतिवध्यमित्यर्थः। तेनेश्वरादौ नातिव्याप्तिः! ज्ञानाभावोऽज्ञानमिति नैयायिकमतनिरासायाह। भावरूपमिति। ननु अज्ञानस्य भावरूपत्वमनुपपन्नम्, अनादेस्तस्य भावरूपत्वे नाशाऽसंभवेनाऽनिर्मोक्षप्रसंगादित्यत आह। यत्किंचिदिति। तथा च भावरूपमित्यनेन तस्याऽभावरूपतैव प्रतिषिध्यते, नाऽभावरूपमित्यर्थकरणात्। लक्षणान्तरमाह। त्रिगुणात्मकमिति। त्रयो गुणाः "सत्वरजस्तमांसि" आत्मानो यस्य तत्तथा। अज्ञानस्य भावरूपत्वे प्रमाणमाह। अहमज्ञ इत्यादीति। आदिना मामहं नजानामीति प्रती-

**इदमज्ञानं समष्टिव्यष्ट्यभिप्रायेणैकमनेकमिति च व्यवह्रियते ।**

प्रश्न—"अजामेकाम्" यह श्रुति 'अज्ञान' एक है यह बतलाती है। "इन्द्रोमायाभिः पुरुरूप ईयते" इससे अज्ञान का अनेकत्व सिद्ध है—ऐसी स्थिति में यह संशय होता है कि 'अज्ञान' एक है या अनेक। उत्तर—इस अज्ञान के लिये समष्टि ( समुदाय ) के अभिप्राय से एकत्व व्यवहार होता है। और व्यष्टि ( प्रत्येक ) के अभिप्राय से अनेकत्व व्यवहार होता है। अर्थात् वह

---

त्तिर्बोध्या। श्रुतिमप्युदाहरति। **दैवात्मशक्तिमिति** । देवश्चासौ आत्मा चेति देवात्मा तस्य शक्तिं "कारणत्वनिर्वाहिकां" अज्ञानमिति यावत्। स्वगुणैः—सत्वादिभिः—निगूढां—आलिङ्गितां ते ध्यानयोगानुगता अपश्यन्निति योजना। श्रुतेश्चेति चकारेणाऽनुमानमपि प्रमाणं सूचितम्। तथाहि—प्रमाणज्ञानं "इदमित्याकारिका वृत्तिः" स्वप्रागभावव्यतिरिक्त-स्वविषयाऽऽवरणस्वनिवर्त्य—स्वदेशगतवस्त्वन्तरपूर्वकं अप्रकाशितार्थ-प्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत्। अज्ञाननिवृत्तिरेव वृत्ते मुख्यं प्रयोजनम्। यथा घटाद्यवच्छिन्नवृत्तिर्घटाद्यवच्छिन्नचेतननिष्ठाऽज्ञानं निवर्तयति।

अज्ञानं विभजते। **इदमज्ञानमिति** । समष्ट्यभिप्रायेणैकमिति व्यवह्रियते, व्यष्ट्यभिप्रायेणाऽनेकमिति व्यवह्रियते इति योजना। गोत्वादिवत्सर्वत्रानुस्यूतत्वं समष्टित्वम्, यथा वनत्वं सर्ववृक्षेषु। व्यष्टित्वं तद्व्यक्तित्वम्। अनेकपदार्थानां संमेलनेन व्यवहारे समष्टिः—यथा जलाशयो वनं ग्राम इति। एकैकव्यवहारे व्यष्टिः, जलं वृक्षो गृहमिति। तदेव-प्रपञ्चयति। **तथाहीत्यादिना समष्ट्यभिप्रायेणेति** । समुदायाभिप्रायेणेत्यर्थः। दार्ष्टान्ते समष्टित्वमुपपादयति। **तथेति** । **नानात्वेन प्रतिभासमानानामिति** । अनेकत्वेन ज्ञायमानानामित्यर्थः। इदं च जीवस्यापि विशेषणम्। अन्तःकरणावच्छिन्नं चैतन्यं जीवः। **समष्ट्यभिप्रायेणेति** । समुदायाभिप्रायेणेत्यर्थः। तथा चाऽन्तःकरणरूपोपाधिभेदेन नानात्वेन प्रतीयमानानां जीवानां तद्गताऽज्ञानानां च समुदायःसमष्टिस्तदभिप्रायेणेति यावत्। **तदेकत्वव्यपदेश इति** । अज्ञाने-

तथाहि—यथा वृक्षाणां समष्ट्यभिप्रायेण वनमित्येकत्वव्यपदेशः । यथा वा जलानां समष्ट्यभिप्रायेण जलाशय इति । तथा नानात्वेन प्रतिभासमानानां जीवगताज्ञानानां समष्ट्यभिप्रायेण तदेकत्व-व्यपदेशः "अजामेकाम्" इत्यादिश्रुतेः । इयं समष्टिरुत्कृष्टोपाधि-तया विशुद्धसत्त्वप्रधाना । एतदुपहितं चैतन्यं सर्वज्ञत्व-सर्वेश्वरत्व-

अज्ञान एक भी है—अनेक भी । जैसे वृक्षों के लिये समष्टि के अभिप्राय से यह एक वन है इस प्रकार एकत्व व्यवहार होता है, क्योंकि नाना प्रकार के बहुत से वृक्षों को ही वन कहते हैं । अथवा जिस प्रकार नाना प्रकार के जलों के एकत्र इकट्ठा हो जाने पर उनमें भी समुदायाभिप्राय से यह एक जलाशय

---

कत्वव्यवहार इत्यर्थः । अस्मिन्नर्थे श्रुतिं प्रमाणयति । अजामिति । चैतन्यव्यवहारोपपादनाय समष्टिं विशिनष्टि । इयमिति समष्टिरिति । अज्ञानसमुदाय इत्यर्थः । उत्कृष्टोपाधितयेति । उत्कृष्टस्य-चैतन्यस्य उत्कृष्टत्वं च मोहादिनाऽप्रतिहतज्ञानात्मकत्वम् । उपाधितया । विशेषण-तया । विशुद्धेति । विशुद्ध'—रजस्तमोभ्यामनभिभूतम । सत्त्वंप्रधानं यस्याः सा तथाविधेयं समष्टिरित्यर्थः । सैव माया । इदमुपलक्षणम् । विशुद्धरजःप्रधाना, विशुद्धतमःप्रधानेत्यपि बोध्यम् । एतदुपहितमिति । सत्त्वप्रधानाऽज्ञानसमष्टिविशिष्टमित्यर्थः । इदमुपलक्षणम् । मलिन-सत्त्वप्रधाना सा अविद्येति गीयते । मलिनं रजस्तमोभ्यामभिभूतं सत्त्वं प्रधानं यस्याः सेत्यर्थः । अत एवोक्तं "माया चाऽविद्या च स्वयमेव भवतीति" स्वयमेव—जगत्कारणीभूतप्रकृतिरेव । केचित्तु शुद्धचैतन्या-श्रितमूलप्रकृतौ प्रतिफलितं चैतन्यमीश्वरः । आवरणशक्तिविशिष्टमूल-प्रकृतिरविद्या, तत्प्रतिफलितं चैतन्यं जीवइत्याहुः अपरेतु विक्षेपशक्ति-प्रधानामाया, तत्प्रतिफलितंचैतन्यमीश्वरः । आवरणशक्तिप्रधानाऽविद्या, तत्प्रतिफलितं चैतन्यं जीवः इति वदन्ति । कार्योपाधिरयं जीवः कारणो-पाधिरीश्वर इति श्रुत्या मायायां प्रतिफलितचैतन्यमीश्वरः । अन्तःकरणे प्रतिफलितचैतन्यं जीव इति संक्षेपशारीरके उक्तम् । अत्रेदं बोध्यम् ।

सर्वनियन्तृत्वादिगुणकमव्यक्तमन्तर्यामी जगत्कारणमीश्वर इति च व्यपदिश्यते । सकलाज्ञानावभासकत्वादस्य सर्वज्ञत्वम् ।

है इस रूप से एकत्व व्यवहार होता है, क्योंकि उन भिन्न-भिन्न प्रकार के नाना जलों का ही नाम जलाशय है। उसी प्रकार विभिन्न रूपों से प्रतीत होने वाले चैत्र-मैत्र आदि प्रत्येक जीवगत अज्ञानों के समूह को एक अज्ञान शब्द से कहते हैं। इसी अज्ञान की प्रमाणस्वरूप यह श्रुति है—"अजामेकां लोहित-शुक्ल-कृष्णाम्" अर्थात् एक ही अविद्या ( अज्ञान ) को अज ( जन्म-मरणरहित ) एवं त्रिगुणात्मक कहा है। यह समष्टिरूप अज्ञान उत्कृष्ट ( परमपितापरमेश्वर ) का उपाधि होने के नाते रजोगुण-तमोगुण से सर्वथा अनभिभूत है इसलिये विशुद्धसत्त्वप्रधान है। इसी कारण विशुद्धसत्त्वप्रधान तथा समष्टिभूत अज्ञानरूप उपाधि से विशिष्ट वह ईश्वरस्वरूप चैतन्य "सर्वज्ञ" कहाता है। और समस्त जीवों के कर्मों पर कण्ट्रोल करने के नाते तदनुरूप फल देता है इस कारण वह "सर्वेश्वर" कहलाता है। सम्पूर्ण जीवों के अन्तः-करणों में वर्तमान होते हुये उन सबकी बुद्धि पर नियन्त्रण करते हैं इसीलिये उन्हें "सर्वान्तर्यामी" तथा "सर्वनियन्ता" कहते हैं। इन्द्रियों के अविषय होने के नाते वह अव्यक्त कहाता है। समस्त चर-अचर प्रपञ्च का विवर्त्तभूत अधिष्ठान ( आश्रय ) होने के नाते "जगत्कारण" कहलाता है। ईश्वर की

---

केवलप्रतिबिंबस्य ईश्वरत्वं जीवत्वं वा न स्वीकरणीयम्, तथासति जीवेश्वरवाचकपदयो र्भागत्याग "जहदजहल" लक्षणाया अनुपपत्तिः स्यात्। अतः प्रतिबिंबत्वविशिष्ट "चेतन" स्यैव जीवत्वम्, ईश्वरत्वं चेति। उक्तमतचतुष्टयेपि बिंबप्रतिबिंबयोरभेदः। अभेदवादे तु प्रतिबिंबो न मिथ्या, ग्रीवास्थमुखे एव प्रतिबिंबत्वं प्रतीयते, प्रतीतिश्च भ्रमरूपा, अतः प्रतिबिंबत्वं मिथ्यैव, न तु प्रतिबिंब इतिपरमार्थः। सर्वज्ञत्व—सर्वेश्वरत्व—सर्वनियन्तृत्वादयो गुणा यत्र तदिति विग्रहः। सर्वज्ञत्वगुणकम्, ईश्वरोपाधिभूतमायायाः सत्वस्य विशुद्धत्वात्। अत एव जीवोपाधिभूताऽविद्यायाः सत्वं मलिनमतोऽल्पज्ञोजीव इति बोध्यम्। सर्वेश्वरत्वं सर्वप्राणिनां कर्मानुरूपफलदातृत्वम्। सर्वज्ञत्वं सकलप्रपञ्चसाक्षित्वम्। ननु ईश्वरोपाधिरज्ञानसमष्टिः कुतः अज्ञानव्यष्टिरेव किं न स्यादित्यत आह। सकलेति। सकलानि च तानि अज्ञानानि च सकलाऽज्ञानानि तेषामवभासकत्वादित्यर्थः।

"यः सर्वज्ञः स सर्ववित्" इति श्रुतेः। ईश्वरस्येयं समष्टिरखिलकारणत्वात् कारणशरीरम्, आनन्दप्रचुरत्वात् कोशवदाच्छादकत्वाच्चानन्दमयकोशः, सर्वोपरमत्वात् सुषुप्तिः। अतएव स्थूलसूक्ष्मप्रपञ्चलयस्थानमिति चोच्यते।

सर्वज्ञता में युक्ति बतलाते हैं कि—सकलाज्ञानावभासकत्वात् इत्यादि। अर्थात् वह समस्त अज्ञानों के अवभासक होने के नाते सर्वज्ञ कहलाता है। श्रुति भी प्रमाण है—"यः सर्वज्ञः" इत्यादिः अर्थात् वह सामान्यरूप से भी सबको जानता है और विशेषरूप से भी सबको जानता है। ईश्वर की यह अज्ञानरूपासमष्टि समस्त संसार का कारण है इसलिये इसे 'कारणशरीर' कहते हैं। और इसमें आनन्द की मात्रा अधिक होने के नाते तथा कोश की तरह आत्मा (ज्ञान) का आच्छादक होने के कारण इसे 'आनन्दमय' कोश भी कहते हैं। अर्थात् जैसे त्वचा समस्त शरीर को व्याप्त कर लेती है उसी प्रकार यह अज्ञान भी आत्मा को सर्वतोभावेन आच्छादित कर लेता है। यहीं समस्त इन्द्रियों के उपराम का स्थान होने के नाते 'सुषुप्ति' कहलाता है। तथा इसीलिये इसे स्थूल तथा सूक्ष्म प्रपंच का लयस्थान कहते हैं॥

---

ईश्वरस्य सर्वज्ञत्वे प्रमाणमाह। यः सर्वज्ञ इति। सर्वज्ञः सामान्यतः, सर्वविद् विशेषतः। इदानीं तस्यैवेश्वरस्याऽज्ञानसमष्ट्युपाधिरेव कारणशरीरत्वं आनन्दमयकोषत्वं सुषुप्तित्वं च लभते इत्याह। ईश्वरस्येयं समष्टिरिति। अज्ञानसमष्टिरित्यर्थः। कारणशरीरं आनन्दमयकोषः सुषुप्तिः स्थूलसूक्ष्मप्रपञ्चलयस्थानमिति चोच्यते इत्यन्वयः। कारणशरीरत्वे हेतुमाह। अखिलकारणत्वादिति। आनन्दप्रचुरः आनन्दमयः स, च कोषश्चेति आनंदमयकोषः। आनन्दमयोनाम प्रियमोदप्रमोदसहिताऽज्ञानम्। अस्य कोषशब्दवाच्यत्वं कोषवदात्मानमाच्छादयतीत्याह। कोषवदाच्छादकत्वाच्चेति। सुषुप्तौ हेतुमाह। सर्वोपरमत्वादिति। सर्वस्य "स्थूलसूक्ष्मोपाधेः" लयो यस्यां "कारणोपाधौ" सा, तस्याः भावस्तत्वं तस्मादित्यर्थः। अत एव। सर्वोपरमत्वादेव। पञ्चीकृताऽपंचीकृतरूपः स्थूलसूक्ष्मप्रपञ्चः तस्य लयस्थानमित्यर्थः। उच्यते इति। श्रुताविति शेषः।

यथा वनस्य व्यष्टयभिप्रायेण वृक्षा इत्यनेकत्वव्यपदेशः, यथा वा जलाशयस्य व्यष्ट्यभिप्रायेण जलानीति, तथाऽज्ञानस्य व्यष्ट्यभिप्रायेण तदनेकत्वव्यपदेशः "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतेः। अत्र व्यस्तसमस्तव्यापित्वेन व्यष्टिसमष्टि-

जैसे नाना प्रकार के बहुत से वृक्षों को समष्टि के अभिप्राय से वन कहते हैं परन्तु उस वन के लिये व्यष्टि के अभिप्राय से अर्थात् जब प्रत्येक वृक्ष का पृथक २ ज्ञान कराते हैं ( यह नीम का वृक्ष है, यह जामुन का, और यह आम का इत्यादि रूप से ) ज्ञान कराने में ये बहुत से वृक्ष हैं इस प्रकार अनेकत्व व्यपदेश होता है। अथवा जिस प्रकार भिन्न २ बहुत से जलों को जब सामूहिक रूप से कहना होता है तब उन सबको जलाशय कहते हैं परन्तु जब प्रत्येक जल का ज्ञान कराना होता है तब यह गंगाजल है, यह यमुना का जल है, इत्यादि रूप से उन २ विभिन्न जलों के नामों से पुकार कर उनमें अनेकत्व व्यवहार करते हैं। उसी प्रकार जगत्कारणी भूत अज्ञान में सामूहिक रूप से एकत्वव्यवहार होता है परन्तु जीवगत अहङ्कार आदि के कारण भूत अज्ञान में व्यष्टि के अभिप्राय से अनेकत्व व्यवहार होता है। इसी का प्रमापक श्रुति है "इन्द्रोमायाभिः पुरुरूप ईयते" इन्द्र=ईश्वर, मायाभिः=अज्ञानों के द्वारा, पुरुरूपः=बहुत्व को, ईयते=प्राप्त करता है। अर्थात् ईश्वर मायाओं के द्वारा ही अनेक प्रकार के रूपों को धारण

---

समष्टिरूपाऽज्ञानं निरूप्य व्यष्टिरूपाऽज्ञानं निरूपयितुं दृष्टान्तौ तावद्दर्शयति। यथेति। तथेति। व्यष्ट्यभिप्रायेणेति। प्रत्येकाऽज्ञानाभिप्रायेणेत्यर्थः। तद्व्यक्तित्वाभिप्रायेणेति यावत्। तदनेकत्वव्यपदेश इति। अज्ञानानेकत्वव्यपदेश इत्यर्थः। तथा च यथा वापीकूपतडागादिषु समुदायविवक्षया जलाशय इत्येकत्वव्यवहारेपि एवं वृक्षसमुदायस्य वनत्वेन रूपेणैकत्वव्यवहारेपि प्रत्येकविवक्षया जलानीति व्यवहारः, एवं वृक्षा इति व्यवहारः, तथा सकलप्रपञ्चकारणीभूताऽज्ञानस्य "समुदायरूपेण अज्ञानत्वेन" एकत्वेपि अहंकारादिकारणीभूतानां जीवगताऽज्ञानानां प्रत्येकविवक्षया "तत्तद्व्यक्तित्वेन" अनेकत्वव्यवहार इति भावः। इन्द्रः परमात्मा। मायाभिः अज्ञानैः।

ताव्यदेशः। इयं व्यष्टिर्निकृष्टोपाधितया मलिनसत्त्वप्रधाना। एतदुपहितं चैतन्यमल्पज्ञत्वानीश्वरत्वादिगुणकं प्राज्ञ इत्युच्यते,

करता है। प्रश्न—जब कि अज्ञान तथा तदवच्छिन्न चैतन्य एक है तो उसमें व्यष्टिता-समष्टिता रूप विरुद्धधर्म कैसे आ पायेंगे। उत्तर—उस अज्ञान में एवं तदवच्छिन्न चैतन्य में व्यस्त ( प्रत्येक जीव ) व्यापी होने के नाते व्यष्टिता व्यपदेश होता है। और समस्त जीवव्यापी होने से समष्टिता व्यवहार होता है। अर्थात् प्रत्येक जीव व्यापी होने से वह व्यष्टिरूप है और समस्तजीव व्यापी से वह समष्टिरूप है। यह व्यष्टिरूप अज्ञान निकृष्ट ( जीव ) का उपाधि होने से मलिन सत्त्वप्रधान ( तमोगुणमिश्रित सत्त्वगुणप्रधान ) है। इस व्यष्टिरूप अज्ञानरूप उपाधि से विशिष्ट चैतन्य अल्पज्ञत्व-अनीश्वरत्व गुणवाला होने से 'प्राज्ञ' (प्रकर्षेण अज्ञ) कहलाता है, क्योंकि यही व्यष्टिभूत अज्ञानोपहित चैतन्य विभिन्नरूपों से

---

पुरुरूपः बहुरूपः। ईयते प्रतीयते इत्यर्थः। एकस्मिन्नज्ञाने व्यष्टि-समष्टिशब्दप्रयोगे निमित्तमाह। अत्रे ति अज्ञाने इत्यर्थः। व्यस्तसमस्तव्यापित्वेनेति। प्रत्येकसमुदायाभिप्रायेणेत्यर्थः। विशुद्धसत्वप्रधानायाः मूलप्रकृतितोजीवप्रकृतेर्भेदंदर्शयति। इयं व्यष्टिरिति। इदं पदेनाऽज्ञानग्रहणम्। अहंकारादिकारणीभूताऽज्ञानव्यक्तिरित्यर्थः। निकृष्टोपाधितयेति। निकृष्टत्वं च मोहापादकत्वम्। निकृष्टस्य जीवस्य। उपाधितया विशेषणतया। मलिनं रजस्तमोभ्यामभिभूतसत्वं प्रधानं यस्याः सा तथाविधा व्यष्टिरित्यर्थः। सैवाऽविद्याशब्देन व्यवह्रियते। एतदुपहितमिति। व्यष्ट्यज्ञानोपहितमित्यर्थः। अविद्योपहितं चैतन्यमिति यावत्। प्राज्ञ इत्युच्यते इति योजना। प्रकर्षेणाऽज्ञःप्राज्ञोजीव इत्यर्थः। ननु अविद्याधीनं जीवत्वं, जीवाश्रिता चाऽविद्येत्यन्योन्याश्रय इति चेन्न प्रकृतेऽन्योन्याश्रयस्याऽदोषत्वात्। स च नोत्पत्तिद्वारा, अविद्याजीवयोरनादित्वात्। नापि ज्ञप्तिद्वारा, जीवस्य स्वप्रकाशत्वात् अविद्यास्तत्राऽध्यस्तत्वेन स्फुरणात्। प्राज्ञत्वे हेतुमाह। एकाऽज्ञानाऽ-

एकाज्ञानावभासकत्वात् । अस्य प्राज्ञत्वमस्पष्टोपाधितयाऽनति-प्रकाशकत्वात् । अस्यापीयमहंकारादिकारणत्वात् कारणशरीरम्, आनन्दप्रचुरत्वात् कोशवदाच्छादकत्वाच्च आनन्दमयकोशः । सर्वोपरमत्वात् सुषुप्तिः । अतएव स्थूलसूक्ष्मशरीरप्रपञ्चलयस्थान-मिति चोच्यते ।

जीवगत एक २ अज्ञान का अलग २ प्रकाशक है इसीलिये इसको प्राज्ञत्व है अर्थात् यह प्राज्ञ है । इसी कारण से यह अस्पष्ट (निकृष्ट जीव) का उपाधि होने के नाते अतिप्रकाशक अर्थात् किसी भी वस्तु का विशेष प्रकाशक नहीं है । और यह व्यष्टिरूप अज्ञान से उपाहित चैतन्य को अहङ्कार आदि का कारण होने से कारण शरीर कहते हैं । तथा आनन्द का प्रचुरत्व ( आधिक्य ) होने से, एवं कोश की तरह ज्ञानशक्ति का आच्छादक होने से ईश्वर की तरह इसे भी आनन्दमयकोश कहते हैं । और समस्त इन्द्रियों का यह उपराम स्थान होने के नाते इसे सुषुप्ति कहते हैं । इसी वजह से स्थूल-सूक्ष्म प्रपंच का यह लयस्थान कहलाता है

---

वभासकत्वादिति । अज्ञानैकदेशावभासत्वादित्यर्थः । जीवस्याऽल्पज्ञत्वे हेतुमाह । अस्येति । अस्य प्राज्ञस्याऽ नतिप्रकाशकत्वात् । अति-प्रकाशकत्वाभावादित्यर्थः । तत्र हेतुमाह । अस्पष्टोपाधितयेति । मलिनसत्वप्रधानाऽज्ञानोपाधिकत्वादित्यर्थः । अस्य जीवस्य । अपि शब्दः ईश्वरोपाधिदृष्टान्तार्थः । इयं व्यष्टिः अविद्येतियावत् कारणशरीर-मित्यनेनाऽन्वयः । कारणशरीरत्वे हेतुमाह । अहंकारादिकारणत्वा-दिति । सुषुप्तौ हेतुमाह । सर्वोपरमत्वादिति । सर्वशब्दोजाग्र-त्स्वप्नविषयपरः । अत एव । सर्वोपरमत्वादेव । स्थूलशरीरस्य स्वकारणसूक्ष्मशरीरे लयः । तस्य स्वकारणेऽ ज्ञाने लयोबोध्यः । ननु प्रलयकाले सुषुप्तिकाले च कथमानन्दप्राचुर्यसंभवः, तदानीमन्तःकरणस्य तद्वृत्त्याऽभावेनाऽऽनन्दग्राहकाभावादित्याशङ्क्य परिहरति । तदानी मिति । सुषुप्तिदशायामित्यर्थः । ईश्वरप्राज्ञौ इति । मायोपहितचैतन्यम् अविद्योपहितचैतन्यं चेत्यर्थः । आनन्दं स्वरूपानन्दम् । अनुभवतः । ननु अन्तःकरणतद्वृत्त्यभावेन कथं स्वरूपानन्दानुभव इत्यत आह । अज्ञानवृत्तिभिरिति । अज्ञानस्य वृत्तयोऽ ज्ञानवृत्तय स्ताभिरित्यर्थः ।

तदानीमेतौ ईश्वर-प्राज्ञौ चैतन्यप्रदीप्ताभिरतिसूक्ष्माभिरज्ञान-वृत्तिभिरानन्दमनुभवतः। "आनन्दभुक् चेतोमुखः प्राज्ञः" इति श्रुतेः। सुखमहमस्वाप्स्वं न किञ्चिदवेदिषम् इत्युत्थितस्य परा-मर्शोपपत्तेश्च।

प्रश्न - प्रलयकाल में ईश्वर को, सुषुप्तिकाल में जीव को आनन्द का अधिक अनुभव होता है यह दोनों की आनन्दमयकोशस्वरूपता के निरूपणावसर में कह चुके हैं, परन्तु प्रलयकाल तथा सुषुप्तिकाल में न अन्तः करण है और न उसकी वृत्तियाँ ही हैं जिनके द्वारा आनन्द का अनुभव ईश्वर तथा जीव कर सकें। अतः आनन्द का ग्राहक जब कि कोई भी प्रमाण नहीं है तब प्रलयकाल में ईश्वर सुषुप्तिकाल में जीव को अधिक आनन्दानुभव होता है यह कहना सर्वथा व्यर्थ है। उत्तर—ईश्वर तथा प्राज्ञ प्रलय एवं सुषुप्तिकाल में भी चैतन्य के द्वारा प्रदीप्त (प्रकाशित) हुयीं अत्यन्त सूक्ष्म अज्ञान की वृत्तियों के द्वारा आनन्द का अनुभव करते हैं। इस विषय में श्रुति भी प्रमाण है—"प्राज्ञ (जीव) चेतो मुख (चैतन्य के द्वारा प्रकाशित) होकर आनन्द को भोगता है, इसके अतिरिक्त सोकर उठे हुवे पुरुषों को यह अनुभव होता है कि—"मैं इतने सुखपूर्वक सोया कि मुझे कुछ भी ज्ञान (खबर) नहीं रहा" ॥

---

ननु वृत्तीनां जडत्वात्कथं ताभिरनुभव इत्यत आह। चैतन्यप्रदीप्ता-भिरिति। चैतन्येन प्रदीप्ताभिरित्यर्थः। अतिसूक्ष्माभिरिति। अस्पष्टा-भिरित्यर्थः। तासां कल्प्यत्वादिति भावः। प्रमाणमाह। आनन्दभु-गिति। आनन्दं भुङ्क्ते अज्ञानवृत्तिभिरनुभवतीत्यानन्दभुक्। चेतो-मुख इति। चैतन्यं मुखवद्भासमानं यस्य स ईश्वर इत्यर्थः। ननु सुषुप्तिदशायां किमज्ञानवृत्त्या, आनन्दस्फुरणस्येश्वरस्य जीवस्यापि स्वत एव संभवात्। तत्राह। सुखमहमस्वाप्समिति सुखमहमस्वाप्स-मित्यानन्दपरामर्शः। न किं चिदवेदिषमित्यज्ञानपरामर्शः नह्यनुभवं विना स्मरणसंभव इति ध्येयम्। अज्ञानस्य समष्टिव्यष्ट्यभिप्रायेण भेदभानेपि-वस्तुतस्तयोर्भेदोनास्तीति दृष्टान्तद्वयेनाह। अनयोरिति। वनवृक्षयोरि-वेति। वृक्षातिरिक्तस्य वनस्याभावेन यथा तयोरभेदः, तथा का-रणसमष्टि-कारणव्यष्ट्योरित्यर्थः। एतदुपहितयोरिति। कारणसम-

अनयोर्व्यष्टिसमष्टयोर्वनवृक्षयोरिव जलाशयजलयोरिव चाभेदः। एतदुपहितयोरीश्वरप्राज्ञयोरपि वनवृक्षावच्छिन्नाकाशयोरिव जलाशयजलगतप्रतिबिम्बाकाशयोरिव चाभेदः। "एषः सर्वेश्वरः" इत्यादि श्रुतेः।

जैसे जलाशय और जल इन दोनों में, तथा वन और वृक्ष इन दोनों में किसी प्रकार का भेद नहीं है, इसी प्रकार व्यष्टिरूप तथा समष्टिरूप अज्ञानों में भी कोई भेद नहीं है। (अभिप्राय यह है कि जैसे जलाशय जलसमुदायरूप होने के नाते जलस्वरूप ही है और जल रूप है ही अतः दोनों ही जलस्वरूप होने के नाते अभिन्न हैं। और जैसे वन वृक्षसमुदायरूप होने के नाते वृक्षस्वरूप ही है, और वृक्ष वृक्षस्वरूप है ही अतः वन और वृक्ष दोनों ही वृक्षरूप होने अभिन्न हैं। इसी प्रकार समष्टिरूप अज्ञान अज्ञानसमुदायरूप है और व्यष्टिभूत अज्ञान अज्ञानरूप है ही—अतः ये दोनों भी अज्ञानरूप होने के नाते अभिन्न ही हैं) ऐसे ही समष्टि तथा व्यष्टिरूप उपाधि से विशिष्ट ईश्वर और प्राज्ञ जीव) में भी उसी प्रकार अभेद है जैसे वन से अवच्छिन्न (सम्बद्ध) आकाश, और वृक्षों से अवच्छिन्न जो आकाश इनमें कोई भेद नहीं है, क्योंकि महाकाश ही दोनों सम्बद्ध है अथ च वह एक ही है। तथा जैसे जलाशय के अन्दर प्रतीत होने वाला जो प्रतिबिम्बभूत आकाश, और जल के अन्दर प्रतीत होने वाला जो प्रतिबिम्बभूत आकाश वह एक ही है अर्थात् जलाशय और जल इन दोनों में प्रतिबिम्बित महाकाश एक ही है (इसी प्रकार समष्टिरूप अज्ञानरूप उपाधि से विशिष्ट जो चैतन्य वह ईश्वर है, और व्यष्टिरूप अज्ञानरूप उपाधि से विशिष्ट चैतन्य प्राज्ञ कहलाता है। यद्यपि इन दोनों में उपाधिप्रयुक्त भेद है परन्तु वस्तुतः यदि देखा जाय तो कोई भी अन्तर नहीं कारण कि चैतन्य एक ही है) इसमें श्रुति प्रमाण है कि—"यही चैतन्य (प्राज्ञ) समस्त इस चर-अचर जगत् का ईश्वर है"

---

ष्टिकारणव्यष्ट्युपहितयोरित्यर्थः। ईश्वरस्य वनावच्छिन्नाकाशवत् जीवस्य वृक्षावच्छिन्नाकाशवच्चाऽभेद इत्यर्थः। अभेदे श्रुतिं प्रमाणयति एष इति। प्राज्ञ इत्यर्थः। अथ वनवृक्षावच्छिन्नाकाशयोरभेदोयुक्तः, वृक्षातिरिक्तवनाभावेन वृक्षावच्छिन्नाकाशस्यैव वनावच्छिन्नाकाशत्वात्, स्वतन्त्रोपाधेरभावात्। नैवं जीवेश्वरयोरौपाधिकयोरभेदोयुक्तः, उपाध्योर्भेदात्। न च तयोरभेदोयुक्तः, तथा सति उपाध्योरभेदे उपहितयोरप्यभेदात् सर्वज्ञत्वकिंचिज्ज्ञत्वादिधर्मसंकरात्, उपाधिनिरूपणवैयर्थ्यापा-

वन-वृक्ष-तदवच्छिन्नाकाशयोर्जल-जलाशय-तद्गतप्रतिविम्बाकाशयो र्वा आधारभूतानुपहित।काशवदनयोरज्ञानतदुपहित चैतन्ययोराधारभूतं यदनुपहितं चैतन्यं तत्तुरीयमित्युच्यते।

जैसे वन से अवच्छिन्न आकाश, तथा वृक्षों से सम्बद्ध आकाश एवं जलाशय गत प्रतिविम्बभूत आकाश तथा नदी आदि जलगत प्रतिविम्बभूत आकाश का आधारभूत अनुपहित (उपाधि रहित) विशुद्ध महाकाश है उसी प्रकार समष्टि-व्यष्टि भूत अज्ञान का तथा अज्ञानरूप उपाधि से विशिष्ट ईश्वर चैतन्य तथा प्राज्ञचैतन्य का आधारभूत जो अनुपहित चैतन्य है उसे ही तुरीयब्रम्ह अर्थात् अज्ञान-ईश्वरचैतन्य-प्राज्ञचैतन्य से चतुर्थ होने के नाते तुरीय ब्रम्ह कहते हैं।

---

ताच। न च "एप सर्वेश्वरः" इति श्रुत्या उपहितयोरभेद इति वाच्यम्। तस्य तिरुद्धधर्मपरित्यागेन स्वरूपचैतन्याभेदे तात्पर्यात्। उपहितयोरभेदे लक्षणावैयर्थ्यप्रसंगाच्च। तस्मात्तदुपहितयोरभेद इति न युक्तमितिचेन्न। अत्र भेदशब्दस्य भेदयतीति व्युत्पत्त्या भेदकत्वमर्थः। भेदकत्वाभावोऽभेदशब्दार्थः। उपाधिभ्यां हि वस्तुतो वस्तु न भिद्यते, किन्तु उप—समीपे स्थित्वा स्वनिष्ठभेदजातीयो भेदोऽनिर्वचनीयस्तत्राऽऽपाद्यते। तस्मादुपाध्योर्न वास्तवं भेदकत्वमिति प्रथमाऽभेदशब्देनोच्यते। तत्र दृष्टान्तमाह। वनेति। यथा वनवृक्षयोर्जलाशयजलयोर्वा न वास्तवं व्योमभेदकत्वम्, तद्वत्प्रकृतोपाध्योरपि न वास्तवं भेदकत्वं चैतन्यस्येत्यर्थः। उपाध्योर्वास्तवभेदकत्वाभावे उपहितयोर्वास्तवोऽभेद इत्याह द्वितीयाऽभेदशब्देन। नत्वभेदशब्देनोपहितयोर्भेद एव नास्तीत्युच्यते, तस्मान्न विरोधः। यद्वा नैयायिकं प्रति "शाम्यतुदुर्जनः" इति न्यायेन औपाधिकयोरेवाऽभेदः किं पुनः स्वरूपचैतन्यस्येति प्रौढिवादेन एतदुक्तमिति ध्येयम्।

अत्रेदं बोध्यम्। ब्रह्मात्मनः आवरकमज्ञानं मूलाऽज्ञानं मूलाऽविद्येति चोच्यते। उपाध्यवच्छिन्नचेतनस्याऽ वरकमज्ञानं तूलाऽज्ञानं अवस्थाज्ञानमिति चोच्यते।

ईश्वरप्राज्ञरूपचेतनस्य समष्टिव्यष्ट्युपहितत्वेऽनुपहितं चैतन्यमन्यदेवेत्यर्थात्सिद्धं भवति, किंतदित्यपेक्षायां तस्य स्वरूपं संज्ञां च दर्शयति।

३

"शान्तं शिवमद्वैतं चतुर्थं मन्यते" इत्यादि श्रुतेः । इदमेव तुरीयं शुद्धचैतन्यमज्ञानादितदुपहितचैतन्याभ्यां तप्तायः पिण्डवदविविक्तं सत् महावाक्यस्य वाच्यं, विविक्तं सल्लक्ष्यमित्युच्यते ।

श्रुति भी प्रमाण है—"शान्त शिव को अद्वैत चतुर्थ (तुरीय) ब्रह्म मानते हैं" तथा और भी ("त्रिषु धामसुयद्भोग्यं भोक्ता भोगश्च यद्भवेत् । तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ) ॥ और यही तुरीय शुद्धचैतन्य (विशुद्धब्रह्म) अज्ञानादि तथा अज्ञानरूप उपाधि से विशिष्ट जो ईश्वर चैतन्य तथा प्राज्ञ चैतन्य से तप्त हुवे अयःपिण्ड (लोहे का गोला) की तरह अविविक्त (अभिन्न) होता हुवा 'तत्वमसि' इस महावाक्य का वाच्य कहाता है, और विविक्त (भिन्न) होता हुवा महावाक्य का लक्ष्य कहलाता है ।

---

वनवृक्षेति । तदवच्छिन्नाऽऽकाशयोरिति । वनवृक्षावच्छिन्नाकाशयोरित्यर्थः । अनुपहितं च तदाकाशं चेत्यनुपहिताकाशं, आधारभूतं च तदनुपहिताकाशं चाऽऽधारभूतानुपहिताकाशं तद्वदित्यर्थः । अज्ञानतदुपहितचैतन्ययोरिति । जीवेश्वरयोरित्यर्थः । आधारभूतमिति । अधिष्ठानभूतमित्यर्थः यदनुपहितमिति । अनवच्छिन्नमित्यर्थः । सर्वव्यापीतियावत् । तुरीयमिति । चतुर्थमित्यर्थः । अज्ञानजीवेश्वरेभ्य इति यावत् । विश्वतैजसप्राज्ञेभ्य इति प्रकरणानुयायिनः । जाग्रत्स्वप्नसुषुप्त्यवस्थाभ्य इत्यपरे । तथा च यथा वनवृक्षावच्छिन्नाकाशापेक्षया ऽनवच्छिन्नाकाशस्य महाकाशत्वम्, तथा कार्यकारणोपाधिद्वयावच्छिन्नचैतन्यद्वयापेक्षया तदधिष्ठानभूतं यदनवच्छिन्नं चैतन्यं "विशुद्धं" तत्तुरीयमुच्यते इति भावः । तत्र प्रमाणमाह । शान्तमिति । अविक्रियमित्यर्थः । शिवं आनन्दस्वरूपम् । अद्वैतं भेदशून्यम् । महावाच्यस्य । तत्वमसीतिवाक्यस्य । अज्ञानस्य शक्ति विभजते । अस्याऽज्ञानस्येति । कार्यानुकूलकारणनिष्ठसामर्थ्यं शक्तिः । आवरणविक्षेपनामकमिति । आवरणविक्षेपानुकूलमित्यर्थः आवरणविक्षेपयोः शक्तित्वाभावात् । तथाहि आवरणं हि चैतन्यविप्लुम् । शक्तिस्तु कारणीभूताऽज्ञाननिष्ठा वाच्या, शक्तिमत एव कारणत्वात् । एवं विक्षेपस्तु कार्यम्, तत्राज्ञानं कारणम् । अतो विक्षेपा-

अस्याज्ञानस्यावरणविक्षेपनामकमस्ति शक्तिद्वयम् । आवरणशक्तिस्तावदल्पोऽपि मेघोऽनेकयोजनायतमादित्यमण्डलमवलोकयितृनयनपथपिधायकतया यथाऽऽच्छादयतीव, तथाऽज्ञानं परिच्छिन्नमप्यपरिच्छिन्नमसंसारिणमवलोकयितृबुद्धिपिधायकतयाऽऽच्छादयतीव, तादृशं सामर्थ्यम् । तदुक्तम्—

प्रश्न—जब कि आत्मा स्वयं प्रकाश है तब वह अपने सत्-चित् आनन्द-स्वरूप को क्यों नहीं पहिचान पाता है अर्थात् वह कौन शक्ति है जो आत्मा को अपने स्वरूप का ज्ञान नहीं होने देती है। उत्तर—इस अज्ञान की आवरण-विक्षेप नाम की दो शक्तियाँ हैं। (आवरण शक्ति वह है जो परदे के समान आत्मा के स्वरूप को ढक लेती है) आवरण शक्ति वह है जिस प्रकार एक अल्प (छोटा सा) मेघ का टुकड़ा अनेक (साढ़े छः हजार) योजन में आयत (विस्तृत) आदित्यमण्डल को अवलोकयिता (दर्शक) लोगों के नयनपथ को परदे के समान ढँक लेता है, उसी प्रकार परिच्छिन्न (स्वल्प) होता हुआ भी अज्ञान जिस आवरण शक्ति से सहकृत होकर अपरिच्छिन्न (व्यापक) असंसारी आत्मा के स्वरूप को अवलोकयिता (प्रमाता) पुरुषों के नयनपथ पर पिधायक (परदा) सा डालकर ढँक लेता है उस सामर्थ्य (शक्ति) को आवरण शक्ति कहते हैं।

---

तुक्त्ता शक्तिरिति। यद्यपि नावरणमज्ञानकार्यम्, तस्याऽनादित्वात्, तथापि तत्प्रयोज्यतास्त्येवेति। तत्र रजःसत्वाभ्यामनभिभूतं तम आवरणशक्तिः। तमस आवरकत्वं चाऽन्यत्र प्रतिपादितम्। आवृणोतीति समाख्या। तथा चाऽधिष्ठानस्वरूपावरणमावरणशक्तिः। परमात्मा परिच्छिन्नः, न प्रकाशते इति व्यवहारहेतुरिति यावत्। आवरणशक्तिं सदृष्टान्तामुपपादयति। आवरणशक्तिरिति। अथ परिच्छिन्नेनाऽज्ञानेना परिच्छिन्न आत्मा कथमाच्छाद्यते इत्याशंकां दृष्टान्तपूर्वकं परिहरति। अल्पोपीति। परिच्छिन्नोपीत्यर्थः। अनेकयोजनायतमिति। अनेकानि च तानि योजनानीत्यनेकयोजनानि तेष्वायतं विस्तीर्णमित्यर्थः। (६५००) षट्सहस्रपंचशतयोजनपरिमितः आदित्यविस्तारः। अवलोकयितृनयनपिधायकतयेति। अवलोकयितॄणां द्रष्टॄणां नयनानि तेषां पन्थाः तस्य विधायकतयेत्यर्थः। परिच्छिन्नमपीति। अल्पमपी-

घनच्छन्नदृष्टिर्घनच्छन्नमर्कम् ।
यथा मन्यते निष्प्रभं चातिमूढः ॥
तथा बद्धवद्भाति यो मूढदृष्टेः ।
स नित्योपलब्धिः स्वरूपोऽहमात्मा ॥

इत्यनयैवाऽऽवरणशक्त्याऽवच्छिन्नस्याऽऽत्मनः कर्तृत्व-भोक्तृत्व-सुख-दुःख-मोहात्मकतुच्छसंसारभावनापि संभाव्यते । यथा स्वाऽज्ञानेनाऽऽवृतायां रज्जां सर्पत्वसंभावना ।

कहा भी है—घन ( अज्ञान ) से ढँकी हुवी दृष्टि ( ज्ञानशक्ति ) वाला अर्थात् अज्ञानी अतिमूढ पुरुष घन ( बादलों ) से ढँके अर्क ( सूर्य ) को प्रभाहीन समझता है उसी प्रकार मूढ दृष्टि पुरुष को जो आत्मावद्ध की तरह भासता है वह नित्योपलब्धि ( नित्यविज्ञान ) स्वरूप आत्मा मैं ही हूँ। इसी आवरण शक्ति से युक्त आत्मा को मैं कर्त्ता हूँ—भोक्ता हूँ—सुखी हूँ—दुःखी हूँ इत्यादि संसार की तुच्छ भावनाएँ भी होती हैं। जिस प्रकार मनुष्य अपने अज्ञान से आवृत ( ढँके हुवे ) स्वरूप वाली रज्जु में सर्प की भावना कर बैठता है ॥

---

त्यर्थः । अवलोकयितृबुद्धीति । अवलोकयितृचैतन्येत्यर्थः । बुद्धिपदस्य चैतन्ये लक्षणा, बुद्धेरज्ञानकार्यत्वेन तदावृतत्वानुपपत्तेः। तथा च यथाऽल्पोपि मेघोऽनेकयोजनविस्तीर्णमादित्यमण्डलमवलोकयितृपुरुषदृष्टिमात्राच्छादकत्वेनाऽऽदित्यमाच्छादयतीत्युपचारादुच्यते तथा परिच्छिन्नस्याप्यज्ञानस्य प्रमातृबुद्धिमात्राच्छादकत्वेनाऽऽत्माऽऽच्छादकत्वमुपचारादुच्यते इति भावः अस्मिन्नर्थे सम्मतिमाह। तदुक्तमित्यादिना। घनच्छन्नदृष्टिरिति। घनेन-मेघेन-छन्ना-पिहिता दृष्टिर्यस्य सः। अतिमूढः घनछन्नमर्कं निष्प्रभं यथा मन्यते, तथा यो मूढदृष्टेः अज्ञानावृतचैतन्यस्य बद्धवद्भाति परिच्छिन्नवद्भाति स नित्यज्ञानस्वरूप आत्माऽहमिति पद्याऽन्वयः। नास्ति न प्रकाशते इति व्यवहारालंबनयोग्यता चाऽऽवरणम्। तच्चाऽऽवश्यकम्, अन्यथा स्वप्रकाशत्वेन "अस्ति प्रकाशते" इति व्यवहारयोग्ये ब्रह्मणि नास्ति न प्रकाशते इति व्यवहारानुपपत्तेः। आवरणशक्त्येति। आवरणशक्तियुक्तयाऽविद्यया इत्यर्थः। अवच्छिन्नस्य। आवृतस्य। अधिष्ठानाऽवरणे हि भ्रमः संभवति, तद्ज्ञाने भ्रमानुपपत्तेरिति भावः।

अधिष्ठानस्वरूपाऽऽवरणवशेन विपरीतार्थसंभावना भवतीत्यत्र दृष्टान्तमाह। **स्वाज्ञानेनेति।** रज्ज्वज्ञानेनेत्यर्थः। **रज्ज्वां** अज्ञानेनाऽऽवृते रज्ज्वच्छिन्न-चैतन्ये। **सर्पत्वसंभावना।** अनिर्वचनीयसर्पोत्पत्तिरिति यावत्। तथा च नामरूपात्मकमखिलं जगद् ब्रह्मैव, संसारश्च तदज्ञाननिबन्धन एवेति मन्तव्यम्। न च रज्जोरेवाऽऽवृतत्वं कथं न स्वीक्रियते इति वाच्यम्! तस्याः जड़त्वेन प्रकाशाऽप्रसक्तेः प्रकाशप्रसक्तौ च प्रकाशाऽभावे आवरण-कल्पनात्। इदमाकारवृत्तिदशायां प्रमातृचैतन्याभिन्नमपि रज्ज्ववच्छिन्न-चैतन्यं न स्फुरतीत्यावरणकल्पनम्। अन्यथाऽभेदेन स्फुरणापत्तेः।

अथ इदमाकारवृत्त्या इदमंशावच्छिन्नमेव चैतन्यं प्रमातृचैतन्याभिन्नं न तु रज्ज्ववच्छिन्नम्। न च इदन्त्वरज्जुत्वयोर्व्याप्यवृत्तितया इदमाकार-वृत्तिदशायां रज्ज्ववच्छिन्नस्यापि चैतन्यस्य प्रमातृचैतन्याऽभिन्नत्वमिति वाच्यम्। अत्रेदं वक्तव्यम्—इदमंशावच्छिन्नचैतन्यं रज्ज्ववच्छिन्नचैतन्याऽभिन्नं न वा—अभेदे इदमंशावच्छिन्नचैतन्यस्य स्फुरणात् रज्ज्ववच्छिन्न-चैतन्यस्यापि स्फुरणं वक्तव्यम्, ततश्च व्यर्थमावरणम्, स्फुरणाभावे सति आवरणस्य कल्पनात्। इदन्त्वरज्जुत्वयोर्भिन्नत्वेन तदवच्छिन्नचैतन्य-योरभेदानुपपत्तेश्च। भिन्नत्वे इदमाकारवृत्त्या इदमंशावच्छिन्न-मेव चैतन्यं प्रमातृचैतन्याभिन्नं, न तु रज्ज्ववच्छिन्नचैतन्यम्, न हि अन्याकारवृत्त्याऽन्यदभिन्नं भवति। तथासति त्वगिन्द्रियज-न्यया घटाकारवृत्त्या रूपावच्छिन्नमपि चैतन्यं प्रमातृचैतन्या-भिन्नं स्यात् अतएव वृत्तौ तत्तदाकारत्वं निवेशितम् उक्तं च **तत्तदाकारवृत्त्युपहितचैतन्यतत्तद्विषयावच्छिन्नचैतन्योरभेद प्रत्यक्ष-त्वप्रयोजक इति।** तस्मान्नेदं वृत्त्या रज्ज्ववच्छिन्नचैतन्यं प्रमातृचैतन्याभिन्नम्। भेदे च न प्रकाश प्रसक्तिरिति व्यर्थमेव रज्ज्ववच्छिन्नचैतन्ये आवरणकल्पनमिति चेत्—सत्यम्। न रज्ज्व-वच्छिन्नचैतन्ये प्रकाशप्रसक्तिः, तस्य भिन्नत्वात्। तथापि न रज्जौ आवरणम्, आवरणस्य चैतन्ये क्लृप्तत्वात् मूलाऽज्ञानस्य चिन्मात्र-विषयकत्वेन तदावरणस्य चिन्निष्ठत्वात्। अतः परिच्छिन्नाज्ञानावरणमपि चैतन्ये एव वक्तव्यम्, न तु जड़े। तदुक्तं "**जड़े आवरणाभावादिति।** किं चाऽतीतानागतस्थले विषयस्याऽसत्वेनाऽऽवरणाश्रयत्वानुपपत्तेस्त-दुपलक्षितचैतन्ये आवरणं वाच्यमिति तस्यैव सर्वत्र तदाश्रयत्वम्।

**विक्षेपशक्तिस्तु यथा रज्ज्वज्ञानं स्वावृतरज्जौ स्वशक्त्या सर्पादिकमुद्भावयति, एवमज्ञानमपि स्वावृतात्मनि विक्षेपशक्त्याऽऽकाशादिप्रपञ्चमुद्भावयति, तादृशं सामर्थ्यम् ।**

जैसे रज्जु विषयक अज्ञान स्व ( अज्ञान ) से आवृत रज्जु में अपनी शक्ति के द्वारा सर्प की भावना को जाग्रत कर देता है, उसी प्रकार अज्ञान ( आत्म-विषयक अज्ञान ) भी अपने द्वारा आवृत आत्मा में विक्षेपशक्ति के द्वारा आकाश आदि प्रपञ्च की उत्पत्ति कर देता है।

---

तस्माद् युक्तमुक्तं रज्ज्ववच्छिन्नचैतन्यमेवाऽऽवृतम्। रज्जौ आवृतत्त्वमुपचर्यते इति दिक्।

विक्षेपशक्तिं सदृष्टान्तामाह। **विक्षेपशक्तिस्त्विति** । विक्षिपति सृजतीति विक्षेपः। तथा च तमःसत्वाभ्यामनभिभूतं रजो विक्षेपशक्तिः। **स्वावृतरज्जाविति** । अज्ञानेनाऽऽवृतं रज्ज्वच्छिन्ने चैतन्ये इत्यर्थः। **स्वशक्त्या** । अज्ञानशक्त्या, विक्षेपशक्त्येति यावत्। **सर्पादिकं** । प्रातिभासिकसर्पादिकं। **उद्भावयति** । उत्पादयति। **अज्ञानमपि** । मूलाज्ञानमपि। **आकाशादिप्रपञ्चमिति** । व्यावहारिकाऽऽकाशादिप्रपञ्चमित्यर्थः। व्यावहारिकत्वं च ब्रह्मज्ञाननिवर्त्यत्वम्, अज्ञानमात्रजन्यत्वं वा। मात्रपदात्प्रातिभासिकव्यावृत्तिः। तस्य दोषजन्यत्वादिति ध्येयम्। **उद्भावयतीति** । उत्पादयतीत्यर्थः। तथा च यथारज्जुविषयकमज्ञानं सर्पोत्पत्तौ कारणं तथाऽऽत्मविषयकमज्ञानमपि स्वावच्छिन्ने आत्मनि विक्षेपशक्त्या आकाशादिप्रपञ्चोत्पत्तौ कारणमिति भावः। **तादृशमिति** । प्रपञ्चजननानुकूलमित्यर्थः। **विक्षेपशक्तिरिति** । विक्षेपशक्तियुक्ताऽविद्या इत्यर्थः। **लिङ्गादीति** । **लिङ्गं**—लिङ्गशरीरम्। निरूपितमज्ञानम्। इदानीं तत्कार्यं निरूपयितुं तत्रोपादानं निमित्तं च दर्शयति। **शक्तिद्वयवदिति** । आवरणविक्षेपशक्तिद्वयवदित्यर्थः। **अज्ञानोपहितमिति** । समष्ट्यज्ञानोपहितमित्यर्थः। व्यष्ट्यज्ञानोपहितस्य जीवत्वात्, जीवस्य चाऽस्वतन्त्रतया जगन्निमित्तत्वाभावादुपादानत्वाभावाच्च। **स्वप्रधानतयेति** । स्वरूपत इत्यर्थः।

तदुक्तम्—"विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत्सृजेदिति। शक्तिद्वयवदज्ञानोपहितं चैतन्यं स्वप्रधानतया निमित्तम्। स्वोपाधिप्रधानतयोपादानं च भवति। यथा लूता तन्तुकार्यं प्रति स्वप्रधानतया निमित्तं, स्वशरीरप्रधानतयोपादानं च भवति।

जैसे कहा भी है—"विक्षेपशक्ति वह है जो अपने द्वारा लिंग (सूक्ष्म) शरीर से लेकर ब्रह्माण्डपर्यन्त समस्त चराचर जगत् की रचना करती है"।

प्रश्न—इस चराचर समस्त जगत् का ब्रह्म निमित्त कारण है अथवा उपादान। उत्तर—शक्तिद्वय (आवरण-विक्षेप) से युक्त समष्टिरूप अज्ञानरूप उपाधि से विशिष्ट चैतन्य (ब्रह्म) स्वयं प्रधानरूप से इस चराचर जगत् का निमित्त कारण है। और अपनी समष्टिरूप अज्ञानरूप उपाधि की प्रधानता के नाते उपादान कारण हो जाता है। [क्योंकि माया जगत् का उपादान कारण है और वह माया (अज्ञान) चैतन्य के आश्रित है इस प्रकार माया से अवच्छिन्न ईश्वर चैतन्य जगत् का उपादान कारण बन जाता है] जैसे मकड़ी स्वयं प्रधानरूप से तन्तुरूप कार्य के प्रति निमित्तकारण है। और वह लूता अपने शरीर की प्रधानता के नाते उपादानकारण होता है क्योंकि उसके शरीर से ही तन्तु का निर्गमन होता है।

---

निमित्तं चाऽत्र कर्तृत्वम्, तच्च कार्यानुकूलज्ञानवत्वम्, तच्च स्वरूपत एवेश्वरस्य संभवति, नत्वविद्याद्वारा, तस्याः जडत्वेन कर्तृत्वाभावादिति भावः। स्वोपाधिप्रधानतयेति। ईश्वरचैतन्योपाधिभूताऽविद्याप्रधानतयेत्यर्थः। उपादानं च भवतीति। चैतन्यमिति पूर्वेणाऽन्वयः। उपादानत्वं चात्र विवर्त्तमानत्वम्। विवर्त्तमानत्वं च स्वस्वरूपाऽपरित्यागेन रूपान्तरप्रदर्शकत्वम् यथारज्ज्वच्छिन्नचैतन्यनिष्ठाऽज्ञानस्य रज्जुस्वरूपाऽपरित्यागेन सर्पादिस्वरूपान्तरप्रदर्शकत्वम्। तथा ईश्वरचैतन्यनिष्ठाऽज्ञानशक्तेरपि चैतन्यस्वरूपाऽपरित्यागेनाऽऽकाशादिस्वरूपान्तराकारेण प्रदर्शकत्वम् विवर्तमानत्वं हि न स्वरूपतश्चैतन्यस्य, किन्तु अविद्याद्वारेति तस्याः प्राधान्यम्। अत एव विवर्त्तमानाऽविद्याधिष्ठानत्वरूपोपादानत्वमीश्वरस्येति ध्येयम्। एकस्योपादानत्वं निमित्तत्वं च लोकसिद्धमेवेत्याह। यथेति। लूता ऊर्णनाभिः। तन्तुरेव कार्यं तन्तुकार्यम्। स्वशरीरप्रधा-

तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाशः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापोऽद्‌भ्यः पृथिवी चोत्पद्यते "एतस्मादात्मन आकाशः संभूतः" इत्यादि श्रुतेः। तेषु जाड्याधिक्यदर्शनात्तमः प्राधान्यं तत्कारणस्य। तदानीं सत्त्व-रजस्तमांसि कारणगुणप्रक्रमेण तेष्वाकाशादिषूत्पद्यन्ते। एतान्येव सूक्ष्मभूतानि

प्रश्न——माया त्रिगुणात्मिका है यह पूर्व में निश्चय हो चुका है तब फिर आकाशादि प्रपञ्च की उत्पत्ति तमोगुण प्रधान है यह निश्चय किस प्रमाण के आधार पर हो सकता है। उत्तर——आकाशादि कार्य प्रपञ्च जड़ होने के नाते तमोगुण प्रधान है अतः उसके समानकारण तमोगुण प्रधान विक्षेपशक्ति विशिष्ट जो समष्टिरूप अज्ञान उससे उपहित चैतन्य से आकाश की उत्पत्ति हुवी, इसके बाद आकाश से वायु की, वायु से जल की, जल से पृथिवी की उत्पत्ति हुवी। इस विषय में श्रुति भी प्रमाण है——"एतस्मादात्मनः" इत्यादि। उन आकाशादि कार्यों में जड़ता का आधिक्य होने के कारण आकाशादि के कारण अज्ञान में तमोगुण की प्रधानता का निश्चय अनुमान से हो जाता है। आकाश आदि की उत्पत्ति के बाद उन आकाश आदि में अपने-अपने कारणगुण के अनुरूप ही

---

नतयेति। तथा च शरीरस्य साक्षात्तन्तूपादानत्वेन तदवच्छिन्नचैतन्ये औपचारिकोऽयव्यवहार इति ध्येयम्। आकाश इति। उत्पद्यते इत्यनेनाऽन्वयः। एवमग्रेपि। तमःप्राधान्ये हेतुमाह। तेष्विति। तत्कारणस्येति। आकाशादिकारणस्याऽज्ञानस्येत्यर्थः। कारणीभूताऽज्ञानस्य त्रिगुणात्मकत्वमाह। तदानीमिति। सृष्टिकाले इत्यर्थः। एतान्येवेति। आकाशादीन्येवेत्यर्थः। सूक्ष्मभूतानीति। विरलावयवानीत्यर्थः। व्यवहाराऽक्षमाणीति यावत्। न तु सूक्ष्मत्वमणुपरिमाणवत्त्वम्, अपञ्चीकृतभूतानां व्यापकत्वात्। उच्यन्ते। वेदान्तविद्भिरिति शेषः। शब्दतन्मात्र-स्पर्शतन्मात्र-रूपतन्मात्र-रसतन्मात्र-गन्धतन्मात्रशब्दैरपञ्चीकृतशब्देन चोच्यन्ते इति भावः। एतेभ्यः इति। तन्मात्रेभ्यइत्यर्थः। अपञ्चीकृतभूतेभ्य इति यावत्। सूक्ष्मशरीराणीति। अपञ्चीकृतसूक्ष्मशरीराणीत्यर्थः। इदमुपल-

तन्मात्राण्यपञ्चीकृतानि चोच्यते। एतेभ्यः सूक्ष्मशरीराणि स्थूलभूतानि चोत्पद्यन्ते।

सूक्ष्मशरीराणि सप्तदशावयवानि लिङ्गशरीराणि। अवयवास्तु ज्ञानेन्द्रियपञ्चकं बुद्धिमनसी कर्मेन्द्रियपञ्चकं वायुपञ्चकञ्चेति।

सत्व-रज-तम ये तीनों गुण उत्पन्न होते हैं। और इन्हीं आकाश आदि पाँचों को अपञ्चीकृत सूक्ष्मपञ्चभूत तथा शब्द आदि तन्मात्रा शब्द से कहते हैं। और इन पञ्चतन्मात्राओं से सूक्ष्मशरीर तथा स्थूलशरीरों की उत्पत्ति होती है।

१७ अवयववाले लिङ्गशरीर को सूक्ष्मशरीर कहते हैं। पाँच ज्ञानेन्द्रिय, पाँच कर्मेन्द्रिय, पाँच वायु, मन तथा बुद्धि ये १७ सप्तदश अवयव हैं। श्रोत्र-त्वचा-आँख-जिह्वा-घ्राण—ये पाँच ज्ञानेन्द्रिय हैं। और ये पाँच ज्ञानेन्द्रिय आकाश आदि के सात्विक अंशों से क्रमशः अलग-अलग उत्पन्न होती हैं। [ अर्थात् आकाश के सात्विक अंश से श्रोत्र उत्पन्न होता है। वायु के सात्विक अंश से त्वचा उत्पन्न होती है। इसी प्रकार तेज के सात्त्वक अंश से चक्षुः। जल के सात्विक अंश से रसना। और पृथिवी के सात्विक अंश से घ्राण उत्पन्न होती है ] "यह घट ही है" इस प्रकार की निश्चयात्मक अन्तःकरण की वृत्ति को बुद्धि कहते हैं। संकल्प विकल्पात्मिका अन्तःकरण की वृत्ति को मन कहते

---

त्तणम्। पञ्चीकृतस्थूलभूतेभ्यः स्थूलशरीराणि चोत्पद्यन्ते इत्यपि बोध्यम्। सूक्ष्मशरीराणि निरूपयति। सूक्ष्मशरीराणीति। सप्तदश अवयवा येषां तानि। लिंगशरीराणीति। समष्टिव्यष्टिलिंगशरीराणीत्यर्थः। श्रोत्रादीनां क्रमस्तदुत्पादकानां भूतानां क्रमोद्रष्टव्यः। तथा च सात्विकांशादाकाशाच्छ्रोत्रमुत्पद्यते। वायोः सात्विकांशात्त्वगिन्द्रियम्,। तेजसः सात्विकांशाच्चक्षुः जलस्य सात्विकांशाज्जिह्वा। पृथिव्याः सात्विकांशाद् घ्राणेन्द्रियञ्चोत्पद्यन्ते इति भावः। तदेवोपपादयति। एतानीति। ज्ञानेन्द्रियाणीत्यर्थः। ज्ञानकरणानीन्द्रियाणीति यावत्। आकाशादीनामिति। आदिना वायुतेजोजलपृथिवीनां परिग्रहः। व्यस्तेभ्यः प्रातिस्विकेभ्यः। बुद्धिं निरूपयति। बुद्धिरिति। निश्चयात्मिकेति। इदमित्थमेवेति ज्ञानं निश्चयः। इदं नीलं, इदं पीतमिति विषयविवेचनं संकल्पः। तद्विपर्ययो विकल्पः।

ज्ञानेन्द्रियाणि श्रोत्रत्वक् चक्षुर्जिह्वाघ्राणाख्यानि। एतान्याकाशादीनां सात्त्विकांशेभ्यो व्यस्तेभ्यः पृथक् पृथक् क्रमेणोत्पद्यन्ते।

बुद्धिर्नाम निश्चयात्मिकाऽन्तःकरणवृत्तिः। मनोनाम संकल्पविकल्पात्मिकाऽन्तःकरणवृत्तिः। अनयोरेव चित्ताऽहङ्कारयोरन्तर्भावः। एते पुनराकाशादिगतसात्त्विकांशेभ्यो मिलितेभ्य उत्पद्यन्ते। एतेषां प्रकाशात्मकत्वात् सात्त्विकांशकार्यत्वम्। इयं

हैं। बुद्धि और मन में ही चित्त तथा अहङ्कार का अन्तर्भाव है। (चित्त का बुद्धि में अहङ्कार का मन में अन्तर्भाव है) और ये (चित्त-बुद्धि-मन-अहङ्कार) मिलित आकाशादिगतसात्त्विक अंशों से पैदा होते हैं। कारण कि ये चारों प्रकाशात्मक हैं और प्रकाश सत्त्वगुण का कार्य है इसलिये आकाश--वायु आदि पाँचों के सात्त्विक अंश इनमें सम्मिलित रहते हैं।

---

चित्ताऽहंकारयोरत्रैवान्तर्भावमाह। अनयोरेवेति। बुद्धिमनसोरेवेत्यर्थः। तत्र चित्तस्य बुद्धावन्तर्भावः, स्मरणस्यापि निश्चयत्वाविशेषात्। अहंकारस्य तु मनस्यन्तर्भावः, तस्यापि संकल्पात्मकत्वात्। एते। चित्तबुद्धिमनोहंकारूपाः। आकाशादीति। आदिना वायुतेजोजलपृथिवीपरिग्रहः। मिलितेभ्य इति। अन्तःकरणस्य गन्धाद्युपलब्धौ साधारणत्वात्पञ्चभूतारभ्यत्वम् श्रोत्रादेस्तु शब्दाद्युपलब्धौ असाधारणत्वाद् व्यस्तभूतारभ्यत्वमिति विशेषः। तथा च चतुर्णामप्यन्तः करणानां भौतिकत्वमित्यवधेयम्। सात्विकांशकार्यत्वे हेतुमाह एतेषामिति। ज्ञानेन्द्रियाणां अन्तःकरणानां चेत्यर्थः। सात्विकांशकार्यत्वमिति। सात्विकांशभूतकार्यत्वमित्यर्थः।

प्रसंगादाह। इयमित्यादिना। बुद्धिपदेन मनसोव्यावृत्तिः। ज्ञानेन्द्रियैरिति। चक्षुस्त्वक्श्रोत्रजिह्वाघ्राणैरित्यर्थः। विज्ञानमयकोषो भवतीति। बुद्धेः सत्वकार्यत्वेन प्रकाशाधिक्याद्विज्ञानमयत्वम्। कोषवदात्माऽऽच्छादकत्वाच्च कोषत्वम्। अयमिति। विज्ञानमयकोषायच्छिन्न-

बुद्धिर्ज्ञानेन्द्रियैः सहिता विज्ञानमयकोशो भवति। अयं कर्तृत्व–भोक्तृत्व–सुखित्व दुःखित्वाद्यभिमानित्वेनेहलोकपरलोकगामी व्यावहारिको जीव इत्युच्यते। मनस्तु ज्ञानेन्द्रियैः सहितं सन्मनोमयकोशो भवति। कर्मेन्द्रियाणि वाक्याणिपादपायूपस्थाख्यानि। एतानि पुनराकाशादीनां रजोंशेभ्यो व्यस्तेभ्यः पृथक् पृथक क्रमेणोत्पद्यन्ते।

यह बुद्धि ज्ञानेन्द्रियों से सहित होने पर विज्ञानमयकोश कहलाती है। और इस बुद्धिरूपविज्ञानमयकोश से युक्त चैतन्य स्वरूप आत्माकर्तृत्वभोक्तृत्व-सुखित्व-दुःखित्व आदि धर्मों का अभिमानी बनता है। इसी कारण यह इहलोक (मृत्युलोक) परलोक (स्वर्गादिलोक) गामी बनता है। तथा व्यवहारिक अवस्था में यही विज्ञानमय से युक्त चिदात्मा जीव कहलाता है। और मन ज्ञानेन्द्रियों से युक्त होने पर मनोमयकोश कहलाता है। वाक् (वाणी) पाणि (हाथ) पाद (पैर) पायु (गुदा) उपस्थ (लिंग) इन्हें कर्मेन्द्रिय कहते हैं। ये कर्मेन्द्रियां आकाश आदि पाँच महाभूतों के पृथक्-पृथक् क्रम से रजोगुण के भागों से उत्पन्न होती हैं।

---

चिदात्मेत्यर्थः। जीव इत्युच्यते इत्यनेनाऽन्वयः। इदमुपलक्षणम् लिंगशरीरोपहितस्येहलोकपरलोकगामित्वात्। मनोमयकोषं निरूपयति। मनस्त्विति।

कर्मेन्द्रियाणि कर्मसाधनानि, तानि विभजते। वागिति। वचनाऽऽदानगमनविसर्गाऽऽनन्दकारणत्वेसति इन्द्रियत्वं क्रमेण वागादीनां प्रत्येकं लक्षणं बोध्यम्। एतानीति। कर्मेन्द्रियाणीत्यर्थः। आकाशादीनामिति। आदिना वायुतेजोजलपृथिवीपरिग्रहः। रजोंशेभ्य इति। त्रिगुणत्वेपि रजःप्रधानाऽऽकाशादिभ्य इति यावत्। तथा च रजोगुणप्रधानादाकाशाद् वागिन्द्रियोत्पत्तिः। तादृशाद्वायोः पाणीन्द्रियस्य, तादृशाच्च तेजसः पादेन्द्रियस्य, तादृशजलात्पायोः, तादृशपृथिवीत उपस्थस्योत्पत्तिरिति भावः। वायून्निर्दिशति। वायव इति। एतेषां, नागादीनाम्। अन्तर्भावादिति। तत्र नागस्योदाने, कूर्मस्य व्याने, कृकरस्य समाने–देवदत्तस्यापाने–धनंजयस्य

वायवः प्राणापानव्यानोदानसमानाः। प्राणो नाम प्राग्गमनवान्नासाग्रस्थानवर्ती। अपानो नाम अवाग्गमनवान् पाय्वादिस्थानवर्त्ती। व्यानो नाम विश्वग्गमनवानखिलशरीरवर्त्ती। उदानो नाम कण्ठस्थानीयऊर्ध्वगमनवानुत्क्रमणवायुः। समानो नाम शरीरमध्यगताशितपीतान्नादिसमीकरणकरः। केचित्तु नाग–कूर्म–कृकर–देवदत्त–धनञ्जयाख्याः पञ्चान्ये वायवः सन्तीति वदन्ति। तत्र नाग उद्गिरणकरः। कूर्म उन्मीलनकरः। कृकरः क्षुत्करः। देवदत्तो जृम्भणकरः। धनञ्जयः पोषणकरः। "प्राणादिष्वन्तर्भावात् प्राणादयः पञ्चैवेति केचित्। एतत्प्राणादिपञ्चक-

प्राण–अपान–व्यान–उदान–और समान ये पाँच प्रकार की वायु हैं। प्राग्गमन ( ऊपर को चलने ) वाली नाक के अगले भाग में रहनेवाली वायु को 'प्राण' वायु कहते हैं। अवाग्गमन ( नीचे को चलना ) वाली गुदास्थान में रहनेवाली वायु को 'अपान' वायु कहते हैं। समस्त शरीर तथा सब नाड़ी आदि में घूमनेवाली वायु को 'व्यान' वायु कहते हैं। ऊपर को चलनेवाली कण्ठस्थान में रहनेवाली वायु 'उदान' वायु कहते हैं। अशित ( खाये हुवे ) अन्न आदि का तथा पीत ( पीये हुवे ) जल आदि का पाचन क्रिया के द्वारा मांस-रुधिर–वीर्य–तथा टट्टी–मूत्र आदि के रूप में परिणत करनेवाली वायु को 'समान' वायु कहते हैं। कोई ( सांख्यमतावलम्बी ) लोग नाग–कूर्म–कृकल–देवदत्त–धनञ्जय—ये भी और पाँच वायु हैं ऐसा कहते हैं। उद्गिरण करनेवाली वायु को 'नाग' कहते हैं। नेत्रों को खोलने तथा बन्द करने वाली वायु को 'कूर्म' कहते हैं। क्षुधा ( भूख ) लगनेवाली वायु को 'कृकल' कहते हैं। जृम्भा ( जम्भाई ) जिससे आवें वह 'देवदत्त' वायु है। सब प्रकार से पुष्टिकर वायु को 'धनञ्जय' वायु कहते हैं। परन्तु वेदान्ती लोगों का कथन है कि इन ( नाग-कूर्म आदि ) वायुवों का प्राणादि वायुवों में ही अन्तर्भाव है अतः प्राण आदि पाँच ही वायु हैं। और ये प्राण आदि पाँच वायु रजोगुण प्रधान आकाशादिकों के मिलित अंशों से उत्पन्न होती हैं। ये प्राणादि पाँच

---

समानेऽन्तर्भाव इति भावः। मिलितेभ्य इति। अपंचीकृतेभ्य इति शेषः। तथा चाऽपंचीकृतमहाभूतेभ्यो रजःप्रधानेभ्यः प्राणादयो जायन्ते

माकाशादिगतरजोंऽशेभ्योमिलितेभ्य उत्पद्यते। इदं प्राणादिपञ्चकं कर्मेन्द्रियैः सहितं सत् प्राणमयकोशो भवति। अस्य क्रियात्मकत्वेन रजोंऽशकार्यत्वम्। एतेषु कोशेषु मध्ये विज्ञानमयो ज्ञानशक्तिमान् कर्तृरूपः। मनोमय इच्छाशक्तिमान् करणरूपः। प्राणमयः क्रियाशक्तिमान् कार्यरूपः। योग्यत्वादेवमेतेषां विभाग इति वर्णयन्ति। एतत्कोशत्रयं मिलितं सत् सूक्ष्मशरीरमित्युच्यते।"

वायु कर्मेन्द्रियों से सहित होने पर 'प्राणमयकोश' कहलाती है। और यह प्राणमयकोशस्वरूप प्राणादि पाँच वायु क्रियात्मक होने के नाते रजोगुण के अंश की कार्य हैं। (पहिले कहे हुवे विज्ञानमय-मनोमय-प्राणमय) इन तीन कोशों में ज्ञानशक्ति प्रधानकोश को 'विज्ञानमयकोश' कहते हैं और वही ज्ञानशक्ति के प्रधान होने के नाते कर्त्ता माना गया है। मनोमयकोश इच्छाशक्ति प्रधान होने के नाते करणरूप है। और प्राणमयकोश क्रियाशक्ति प्रधान होने के नाते कार्यरूप है। पूर्वोक्त विज्ञानमय-मनोमय-प्राणमय इन तीनों कोशों में क्रमशः कर्त्तृत्व-करणत्व-कार्यत्व की अलग-अलग योग्यता होने के नाते इन तीनों कोशों का कर्त्ता-करण-कार्य—इस रूप से विभाग किया है। और ये तीनों कोश मिलकर सूक्ष्म शरीर कहलाते हैं।

---

इति भावः। प्राणस्यापि अन्तःकरणवत्साधारणत्वात्पञ्चभूतारभ्यत्वम्। अस्य। कर्मेन्द्रियपंचकस्य—प्राणादिपंचकस्य चेत्यर्थः।

कारणशरीरवत्सूक्ष्मशरीरमपि द्विविधम्, समष्टिरूपं व्यष्टिरूपं च। समष्टित्वे हेतुमाह अत्रापीति। अखिलं च तत्सूक्ष्मशरीरं चेति अखिलसूक्ष्मशरीरम्। एकबुद्धिविषयतयेति। एकबुद्धेर्विषय इति एकबुद्धिविषयः, तस्य भावस्तत्ता तयेत्यर्थः। तथा च यावतां सूक्ष्मशरीराणां सूत्रात्मना हिरण्यगर्भाख्येन स्वीयैकबुद्ध्या विषयीकृतत्वात्समष्टित्वमित्यर्थः। तत्र दृष्टान्तमाह। वनवदिति। अस्यंच सूक्ष्मशरीरस्य। व्यष्टित्वमाह। अनेकबुद्धिविषयतयेति। व्यष्टिरपीति। तथाचाऽनेके ये जीवास्तेषां स्वस्वबुद्धिविषयत्वेनाऽनेकबुद्धिविषयतया व्यष्टित्वमित्यर्थः। तत्र दृष्टान्तमाह। वृक्षवदिति।

अत्राप्यखिलसूक्ष्मशरीरमेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिः। अनेकबुद्धिविषयतया वृक्षवज्जलवद्वा व्यष्टिरपि भवति। एतत्समष्ट्युपहितं चैतन्यं सूत्रात्मा हिरण्यगर्भः प्राणश्चेत्युच्यते। सर्वत्रानुस्यूतत्वाज्ज्ञानेच्छाक्रियाशक्तिमदुपहितत्वाच्च। अस्यैषा

यहाँ पर भी समस्त सूक्ष्म शरीर एक बुद्धि ( प्राज्ञ की बुद्धि ) के विषय होने के नाते वन और जलाशय की तरह समष्टिरूप हैं। तथा अनेक बुद्धियों के अलग-अलग विषय होने के नाते व्यष्टिरूप माने गये हैं। और इन अनन्त सूक्ष्म शरीरात्मक समष्टिरूप उपाधि से विशिष्ट जो चैतन्य अर्थात् समष्टिरूप सूक्ष्म शरीर का अभिमानी चैतन्य अर्थात् समष्टिरूपसूक्ष्मशरीरों में रहनेवाला चैतन्य ही सूत्रात्मा-हिरण्यगर्भ-प्राण—इन अलग-अलग नामों से कहा जाता है। क्योंकि वह ( समस्तसूक्ष्मशरीराभिमानी ) चैतन्य माला में सूत्र की नाईं

---

अत्रेदं बोध्यम्। न लिंगशरीरसमुदायः समष्टिः। किं तु व्यापकं लिंगशरीरं समष्टिशब्देनोच्यते। तदुपहितो हिरण्यगर्भ इति। तस्य व्यापकत्वमेकत्वं च युज्यते। अयं च जीव एव नत्वीश्वरः, "सोऽबिभेत्। इत्यादिना भयवत्वादिश्रवणात्। व्यष्टिशब्देन च परिछिन्नानि लिंगशरीराणि उच्यन्ते, तदुपहिताश्चाऽनेके जीवाः। व्यष्टिसमष्टिलिंगशरीरयोस्तु नाऽभेदः, तथा सति तदुपहितयोरप्यभेदे सर्वज्ञत्वादिधर्मसंकरप्रसंगात्। मूले त्वभेदशब्दः पूर्ववद्व्याख्येयः। एतेन यथा वृक्षसमुदायो वनम्, तथा लिंगशरीरसमुदायो न समष्टिः। तथा सति वृक्षावच्छिन्नकाशसमुदायो यथा वनावच्छिन्नाकाश एव, नत्वतिरिक्तः, अतिरिक्तोपाधेरभावात्, तथैव समष्टिलिंगशरीरोपहितहिरण्यगर्भोपि परिच्छिन्नलिंगशरीरोपहिताऽस्मदाद्यनेकजीवसमूहः स्यात्, अतिरिक्तोपाधेरभावात्। न चेष्टापत्तिः, हिरण्यगर्भस्य प्रभूतपुण्यजीवविशेषस्याऽस्मदादिभ्योभिन्नत्वेन श्रूयमाणत्वात्। किं च हिरण्यगर्भलिंगशरीरस्य व्यापकत्वमेकत्वं च श्रूयते, तत्परिच्छिन्नलिंगशरीरोपहिताऽस्मदाद्यनेकजीवसमूहस्य हिरण्यगर्भत्वेन न युज्यते। किं च "ज्ञानमप्रतिहतं तस्य" इत्यादिना हिरण्यगर्भस्य सर्वज्ञत्वादि ज्ञायते। यदि जीवसमूहस्य हिरण्यगर्भत्वम्, तदा समूहस्य समूहिभ्योऽतिरिक्तत्वाभावेनाऽस्मदादीनामेव हिरण्य-

समष्टिः स्थूलप्रपञ्चापेक्षया सूक्ष्मत्वात् सूक्ष्मशरीरम्, विज्ञानमया-दिकोशत्रयं जाग्रद्वासनामयत्वात् स्वप्नोऽत एव स्थूलप्रपञ्चलय-स्थानमितिचोच्यते। एतद्व्यष्ट्युपहितं चैतन्यं तैजसो भवति, तेजोमयान्तःकरणोपहितत्वात्। अस्यापीयं व्यष्टिः स्थूलशरीरापे-क्षया सूक्ष्मत्वादिति हेतोरेव सूक्ष्मशरीरम्, विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात् स्वप्नोऽत एव स्थूलशरीरलयस्थानमिति चो-

सर्वत्रसूक्ष्मशरीरों में विद्यमान है, एवं ज्ञान-इच्छा-क्रियात्मक शक्तिमान् पूर्वोक्त विज्ञानमय-मनोमय-प्राणमयरूप कोशात्मक उपाधि से विशिष्ट है। [ अर्थात् ज्ञानात्मक शक्तिमान् विज्ञानमयकोशात्मक उपाधि से अवच्छिन्न चैतन्य सूत्रात्मा है। इच्छारूप जो शक्ति तादृशशक्तिमान् जो मनोमयकोशरूप उपाधि—उससे विशिष्ट चैतन्य हिरण्यगर्भ है। तथा क्रियात्मक जो शक्ति तादृशशक्तिमान् जो प्राणमयकोशात्मक उपाधि उससे अवच्छिन्न चैतन्य प्राण है ] इस सूत्रात्मा-स्वरूपहिरण्यगर्भ की विज्ञानमयादिकोशत्रयरूपशरीरात्मकसमष्टि स्थूलशरीरात्मक-समष्टिरूप प्रपञ्च की अपेक्षया सूक्ष्म होने के नाते सूक्ष्मशरीर कहलाती है। विज्ञानमयादिकोशत्रयविराटरूप से जाग्रत् अवस्थाकालीन अनुभवजन्य वासनामय होने के नाते स्वप्नरूप है इसीलिये स्थूल प्रपञ्च का लयस्थान भी वह कहा जाता है। व्यष्टिरूपसूक्ष्मशरीरात्मक उपाधि से विशिष्ट चैतन्य को तैजस कहते हैं।

---

गर्भत्वेन सर्वज्ञत्वादिप्रसंगः। नचेष्टापत्तिः। अनुभवविरोधात्। तस्मा-ल्लिंगशरीरसमुदायः समष्टिरिति समाहितम्।

सर्वत्राऽनुस्यूत्वादिति। सर्वत्र विद्यमानत्वादित्यर्थः। तावतैव सूत्रात्मेति व्यपदेश इति भावः। हिरण्यगर्भत्वे युक्तिमाह। ज्ञानेति। ज्ञानेच्छाशक्तिमदन्तःकरणोपहितत्वादित्यर्थः। प्राण इति व्यपदेशे तामाह। क्रियेति। अस्य। हिरण्यगर्भस्य। जाग्रद्वासनामयत्वा-दिति। विराट्रूपेणानुभूतस्थूलप्रपञ्चविषयकवासनामयत्वादित्यर्थः। स्वप्नः। स्वप्नमयत्वम्। अतएव। वासनामयत्वादेव। सूक्ष्मशरीर-समष्ट्युपहितचैतन्यस्य हिरण्यगर्भत्वं प्रतिपाद्य सूक्ष्मशरीरव्यष्ट्युपहितचै-

च्यते । एतौ सूत्रात्मतैजसौ तदानीं मनोवृत्तिभिः सूक्ष्मविषयाननुभवतः । "प्रविविक्तभुक्तैजसः" इत्यादिश्रुतेः । अत्रापि समष्टिव्यष्ट्योस्तदुपहित सूत्रात्मतैजसयोर्वनवृक्षवत्तदवच्छिन्नाकाशवच्च जलाशयजलवत्तद्गतप्रतिबिम्बाकाशवच्चाभेदः । एवं सूक्ष्मशरीरोत्पत्तिः ।

क्योंकि वह तेजोमय जो अन्तःकरण तादृश अन्तःकरणरूप उपाधि से विशिष्ट है। इस हिरण्यगर्भ की यह व्यष्टिस्थूलशरीर की अपेक्षया सूक्ष्म है इस कारण से उसे सूक्ष्मशरीर कहते हैं। और यह सूक्ष्मशरीर वासनामय होने के नाते स्वप्न तथा स्थूलशरीर का लयस्थान कहा जाता है, ये सूत्रात्मा और तैजस दोनों सुषुप्ति अवस्था में मन की वृत्तियों के द्वारा सूक्ष्मविषयों का अनुभव करते हैं। जैसे कहा भी है—"तैजस ही वासनामयसूक्ष्मविषयों का अनुभव करता है" यहाँ पर भी समष्टि व्यष्टि का, इनसे उपहितसूत्रात्मा तथा तैजस का पूर्ववत् वन-वृक्ष की तरह, तदवच्छिन्न आकाश की तरह, जलाशय जल की तरह, तत्प्रतिबिम्बित आकाश की तरह अभेद है। अपंचीकृत महाभूतों से इसी तरह सूक्ष्मशरीर की उत्पत्ति होती है।

---

तन्यस्य तैजसत्वं प्रतिपादयति। एतद्व्यष्ट्युपहितमिति। सूक्ष्मशरीरव्यष्ट्युपहितमित्यर्थः। तेजोमयान्तःकरणेति। अन्तःकरणस्य तेजोमयत्वं तेजोबाहुल्यात् जाग्रद्वासनामयत्वादिति। विश्वचैतन्येनानुभूतस्थूलशरीरविषयकवासनामयत्वादित्यर्थः। यथा स्वप्नावस्थायां प्राज्ञेश्वरौ अज्ञानवृत्तिभिरानन्दमनुभवतः, तथा सूत्रात्मतैजसावपि मनोवृत्तिभिः शब्दादिविषयाननुभवत इत्याह। एताविति। तदानीं—स्वप्नकाले। मनोवृत्तिभिरिति। यद्यपि स्वाप्निकपदार्थानां साक्षिण्यस्तत्वेन सुखादिवत्साक्षिवेद्यत्वम्, तथापि मनसि वृत्तिः "येषां" येषां ते निद्रादिदोषाः, तत्साहाय्येन स्वयं विषयाननुभवत इत्यर्थं इति द्रष्टव्यम्। उक्तेऽर्थे प्रमाणमाह। प्रविविक्तभुक् तैजस। इति। प्रविविक्तं स्थूलात्सूक्ष्मवासनामयं भुंक्ते इति प्रविविक्तभुक्। एवं विज्ञानमयादिकोषत्रयस्य समष्टिरूपस्य तदवच्छिन्नसूत्रात्मनः व्यष्टिरूपविज्ञानादिमयादिकोपत्रयस्य तदवच्छिन्नतै-

स्थूलभूतानि तु पञ्चीकृतानि। पञ्चीकरणं त्वाकाशादि-पञ्चस्वेकैकं द्विधा समं विभज्य तेषु दशसु भागेषु प्राथमिकान् पञ्चभागान् प्रत्येकं चतुर्धा समं विभज्य तेषां चतुर्णां भागानां स्वस्वद्वितीयार्धभागपरित्यागेन भागान्तरेषु संयोजनम्। तदुक्तम्—

स्थूलप्रपच की उत्पत्ति पंचीकृत महाभूतों से होती है। अतः स्थूल पांच महाभूतों का ही पंचीकरण होता है। प्रश्न—पंचीकरण क्या वस्तु है। उत्तर—आकाश आदि पाँच महाभूतों में से प्रत्येक के समानरूप से दो-दो भाग कर देने चाहिये। इस प्रकार से दश १० भाग हो जाते हैं। उसके बाद उन दश-भागान्तर्गत प्रथम पाँच भागों में से प्रत्येक के फिर समानरूप से चार भाग करके फिर उन चारों भागों में से प्रत्येक भाग को अपने-अपने दूसरे भाग को छोड़कर दूसरे-दूसरे भागों में अर्थात् दूसरे महाभूतों के भागों मे मिला देने को ही पंचीकरण कहते हैं। जैसे पृथिवी के दो भाग किये। उन दोनों में से एक भाग

---

जसचैतन्यस्य चाऽभेदं दर्शयति। अत्रापीति। सूक्ष्मशरीरनिरूपणमुपसं-हरति। एवमिति। स्थूलानि निरूपयति। स्थूलभूतानीति। पञ्चीकरणं स्थूलतापत्तिः। पञ्चीकृतानीति। अपञ्चीकृतभूतेभ्यः "तामसांशेभ्यो" जायन्त इति शेषः। पञ्चीकरणप्रकारमाह। आकाशादिपञ्चस्विति। अस्य। पञ्चीकरणस्य। त्रिवित्करणश्रुतेरिति। "तासामेकैकां त्रिवृतं त्रिवृतं करवाणीति त्रिवृत्करणश्रुतिः। तासां—पृथिव्यावेजोरूपाणां मध्ये एकैकां देवतां त्रिवृतं यथा भवति तथा करवाणीति श्रुतेरर्थः। एषा चात्र प्रक्रिया—पृथिवीजलतेजांसि भूतानि तेषां भूतानां मध्ये एकैकं भूतं द्विधा विभज्य तत्राप्येकं भागं द्विधा विभज्य स्वांशपरित्यज्येतरयोर्योजनीयम्, इदं वृत्तात्वत्रिकरणम्। पंचीकरणस्याप्युपलक्षणत्वादिति। "आत्मनः आकाशः संभूत" इत्यादिना पञ्चानामपि भूतान्यामुत्पत्तिकथनात्, पुराणादौ आकाशवाय्वादेरपि स्थूलसूक्ष्मविभागकथनादिति भावः। ननु

"द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः। स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते ॥" अस्याप्रामाण्यं नाशंकनीयं, त्रिवृत्करणश्रुतेः पञ्चीकरणस्याप्युपलक्षणत्वात्। पञ्चानां पञ्चात्मकत्वे समानेऽपि तेषु च "वैशेष्यात्तद्वादस्तद्वाद" इति न्यायेनाकाशादि-

को ज्यों का त्यों छोड़कर दूसरे भाग के चार भाग कर ले, और उन चारों भागों को प्रत्येक के हिसाब से इतर ( जल-तेज-वायु-आकाश ) चारों में मिला दिया जावे। इसी प्रकार जल के दो भाग करके एक भाग को ज्यों का त्यों रखकर दूसरे भाग के फिर चार हिस्से करके उन्हें जल के अतिरिक्त इतर चारों में मिला देना चाहिये। तो फिर वे पाँच के पाँच पूरे हो जाते हैं। यही बात पंचदशी में—"द्विधाविधाय" इत्यादिकारिका से बतलायी है। इस पंचीकरण के विषय अप्रामाण्य की आशङ्का नहीं करनी चाहिये, क्योंकि त्रिवृत्करण की श्रुति से पंचीकरण का भी उल्लेख हो जाता है। प्रश्न—जब कि पाँचों महाभूतों में परस्पर में पाँचों महाभूतों के भाग मिल जाते हैं तब तो आकाश में भी पृथिवी आदि का अंश मिल जाने से आकाश का भी चाक्षुष प्रत्यक्ष होना चाहिये। एवं वायु में भी पृथिवी का अंश मिल जाने से वायु का चाक्षुष तथा वायु में गन्ध का प्रत्यक्ष होना चाहिये। उत्तर—यह सब पूर्वपक्षी की शङ्का ठीक है परन्तु इन पाँचों महाभूतों में अपने-अपने अंशों का प्राधान्य होने के नाते आकाशादि व्यवहार होता है। यही कहा है "वैशेष्यात्" इत्यादि।

---

यदि पञ्चीकरणेन सर्वेषां भूतानामेकीभावस्तर्हि "इयं पृथिवी" इदं जलमिति व्यवहारः कथं स्यादित्याशंक्याह। वैशेष्यादिति। विशेषस्य भावो वैशेष्यं, तस्मात्। पृथिव्यादिभागानामाधिक्यादित्यर्थः। तत्तद्वादः। इयं पृथिवी इदं जलमित्यादिव्यवहारइत्यर्थः। अत एव पंचीकरणे आकाशवाय्वोरपि रूपवत्त्वेन महत्त्वेन च चाक्षुषत्वं प्रसज्येत इति दूषणं प्रत्याख्यातम्। रूपवत्वमहत्वयोर्विद्यमानत्वेपि आकाशादिभागयोराधिक्येन तदभिभवोपपत्तेः तदानीमिति। पंचीकरणकाले इत्यर्थः। आकाशे। पंचीकृताऽऽकाशे। एवं सर्वत्र। अभिव्यज्यते। स्फुटतयेति सर्वत्र योजनीयम्। पंचीकरणाऽनंगीकारे आकाशवाय्वोः सूक्ष्मत्वेन सूक्ष्मपृथिव्यां

व्यपदेशः संभवति। तदानीमाकाशे शब्दोऽभिव्यज्यते, वायौ-शब्दस्पर्शौ, अग्नौ शब्दस्पर्शरूपाणि, अप्सु शब्दस्पर्शरूपरसाः, पृथिव्यां शब्दस्पर्शरूपरसगन्धाश्च।

एतेभ्यः पञ्चीकृतेभ्यो भूतेभ्यो भूर्भुवः-स्वर्महर्जनस्तपःसत्य-मित्येतन्नामकानामुपर्युपरिविद्यमानानामतल-वितल-सुतल रसातल-तलातल-महातल-पातालनामकानामधोऽधोविद्यमानानां लोकानां ब्रह्माण्डस्य तदन्तर्वर्त्तिचतुर्विधस्थूलशरीराणां तदुचितांनामन्नपाना-दीनां चोत्पत्तिर्भवति।

अर्थात् अपने-अपने अंशों की विशेषता होने के नाते ही यह पृथिवी है, यह जल है इत्यादि व्यवहार होता है। उस समय अर्थात् पाँच महाभूतों के पंचीकरण के समय आकाश में शब्दगुण की अभिव्यक्ति ( उत्पत्ति ) होती है। वायु में शब्द-स्पर्श, अग्नि में शब्द-स्पर्श-रूप, जल में शब्द-स्पर्श-रूप-रस और पृथिवी में शब्द-स्पर्श-रूप-रस-गन्ध, उत्पन्न होते हैं।

इन्हीं पचीकृत महाभूतों से भूलोक, भुवलोक, स्वर्गलोक, महलोक, जनलोक, तपलोक, सत्यलोक, इन ऊपर-ऊपर विद्यमान लोकों की, तथा अतल, वितल, सुतल, रसातल, तलातल, महातल, पाताल नामक नीचे-नीचे विद्यमान लोकों की उत्पत्ति होती है। तथा इन्हीं से ब्रह्माण्ड की, स्थूल शरीरों की, एवं तदुचित अन्नपादिना की उत्पत्ति होती है।

---

गन्धानुपलंभवदाकाशवाय्वोः शब्दस्पर्शानुपलब्धिप्रसंगात्। यदि पंचीकर-णाभावेपि शब्दस्पर्शोपलब्धिः स्यात्तर्हि तद्वदेव त्रिवृत्करणाभावेपि "तेजोऽ-वन्नेषु" रूपाद्युपलब्धिप्रसक्त्या व्यवहारोपपत्तौ त्रिवृत्करणमपि न सिद्ध्येत्। पृथिव्यादिपंचमहाभूतोत्पत्तिमुक्त्वा चतुर्दशभुवनादीनामुत्पत्तिं दर्शयति। एतेभ्य इति। विद्यमानामिति। अस्योत्पत्तिर्भवतीत्यनेने-नाऽन्वयः। अग्रे षष्ठ्यन्तानां उत्पत्तिर्भवतीत्यनेनान्वयः। तदन्तर्व-र्तीति। ब्रह्माण्डान्तर्वर्तीत्यर्थः। चतुर्विधेति। वक्ष्यमाणेत्यादि। स्थूल-शरीराणामिति। ब्रह्माण्डान्तर्वर्तिपृथिवीत ओषधय उत्पन्नाः, ओषधीभ्यो-ऽन्नं,मातापितृभ्यां भुक्तान्नपरिणामरेतःशोणित,तद्द्वारा स्थूलशरीरोत्पत्ति-र्भवतीति भावः। तदुचितानामिति। तद्भोग्यानामित्यर्थः। पूर्ववदत्रापि-

चतुर्विधस्थूलशरीराणि जरायुज–अण्डज–स्वेदज–उद्भिज्जाख्यानि। जरायुजानि जरायुभ्योजातानि मनुष्य-पश्वादीनि। अण्डजानि अण्डेभ्योजातानि पक्षि-पन्नगादीनि। स्वेदजानि स्वेदेभ्योजातानि यूका-मशकादीनि। उद्भिज्जानि भूमिमुद्भिद्य जातानि लता-वृक्षादीनि।

होनेवाला शरीर स्वेदज कहलाता है जैसे यूका (जुएँ) मशक (मच्छर) आदि। भूमि का उद्भेदन करके उत्पन्न होनेवाले 'उद्भिज्ज' शरीर कहलाते हैं जैसे लता-वृक्ष आदि। यहाँ पर भी चार प्रकार का यह स्थूल शरीर एक बुद्धि का विषय होने के नाते वन तथा जलाशय की तरह समष्टिरूप है, और अनेक बुद्धि का विषय होने के कारण वृक्ष और जल की तरह व्यष्टिरूप है। इस समष्टि से उपहित चैतन्य को वैश्वानर तथा विराट् कहते हैं, कारण कि यह समष्ट्युपहित चैतन्य सम्पूर्ण प्राणियों में 'मैं' इस प्रकार के अभिमान द्वारा

---

समष्टित्वं व्यष्टित्वं च दर्शयति। अत्रापीति। तथा च स्थूलशरीरमपि द्विविधम्, समष्टिरूपं, व्यष्टिरूपं च। चतुर्विधसकलस्थूलशरीरमेकबुद्धिविषयतया समष्टिर्भवति वनवत्, प्रत्येकमनेकबुद्धिविषयतया व्यष्टिर्भवति वृक्षवत्,। एतत्समष्ट्युपहितमिति। स्थूलसमष्ट्युपहितमित्यर्थः। तथाचाऽज्ञानसमष्ट्युपहितचैतन्यमीश्वरः। समष्टिसूक्ष्मशरीरोपहितचैतन्यं हिरण्यगर्भः। समष्टिस्थूलशरीरोपहितचैतन्यं विराड़िति सारम्। अस्य। विराटचैतन्यस्य। एषा समष्टिः चतुर्विधस्थूलशरीरम्,। अन्नविकारत्वात्। पृथिवीविकारत्वात्। अन्नमयकोष इति। तथा च अज्ञानोपहित आनन्दमयः। बुद्ध्युपहितोविज्ञानमयः,मनउपहितो मनोमयः। प्राणोपहितःप्राणमयः। स्थूलशरीरोपहितश्चाऽन्नमय इति संक्षेपः। अत्रेदं बोध्यम् न स्थूलशरीरसमुदायः समष्टिः, तथासति स्थूलशरीरोपहिताऽस्मदादिजीवसमुदाय एवविराट् स्यात्,। न चेष्टापत्तिः विरोजोऽग्नि,तया श्रवणात्। नापि व्यापकं स्थूलशरीरं समष्टिः, तदुपहितश्च विराड़िति युक्तम्। अस्मदादिवत् विराजः प्रत्यक्षत्वप्रसंगात्। किं तु परिच्छिन्नचतुर्मुखस्थूलशरीरोपहितः सर्वज्ञोजीवविशेष एव विराट्

अत्रापि चतुर्विधस्थूलशरीरम् एकानेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिः, वृक्षवज्जलवद्वा व्यष्टिरपि भवति। एतत्समष्ट्युपहितं चैतन्यं वैश्वानरो विराडित्युच्यते सर्वनराभिमानित्वाद् विविधं राजमानत्वाच्च। अस्यैषा समष्टिः स्थूलशरीरमन्नविकारत्वादन्नमयकोशः, स्थूलभोगायतनत्वाच्च स्थूलशरीरं जाग्रदिति च व्यपदिश्यते।

एतद्व्यष्ट्युपहितं चैतन्यं विश्व इत्युच्यते। सूक्ष्मशरीराभिमानमपरित्यज्य स्थूलशरीरादिप्रविष्टत्वात्। अस्याप्येषा

जरायुज-अण्डज-स्वेदज-उद्भिज—ये चार प्रकार के स्थूल शरीर हैं। जरायुओं (जेर-माँस की झिल्ली) से पैदा होनेवाले शरीर जरायुज कहलाते हैं जैसे—मनुष्य—पशु आदि। अण्डों से पैदा होनेवाले पक्षी—तथा पन्नग (सर्प) आदि के शरीर अण्डज कहलाते हैं। स्वेद (पसीना) से उत्पन्न विविध (अनेक) प्रकार से राजमान (शोभायमान) है। इस चतुर्विधस्थूल शरीर की समष्टि ही स्थूलशरीर है और इस समष्टिरूप स्थूलशरीर को अन्न के विकार के कारण अन्नमयकोश कहते हैं। और यही समष्टिरूपस्थूलशरीर भोग का आयतन (स्थान) होने के नाते जाग्रत् कहा जाता है।

चतुर्विधस्थूलशरीरों की व्यष्टि से उपहित चैतन्य को विश्व कहते हैं। कारण कि यह सूक्ष्मशरीराभिमान को न छोड़ता हुवा स्थूलशरीर में "मैं" इस रूप से प्रविष्ट हो जाता है। इस अज्ञान की यह व्यष्टि स्थूलशरीर कहलाती है तथा

---

तस्य समष्ट्युपहितत्वव्यवहारोऽस्मदादिसकलस्थूलशरीराभिमानात्, न तु वस्तुतः समष्ट्युपहितत्वम्। स चाऽस्मदादिभ्योभिन्नः, अन्यथा सर्वज्ञत्वादिधर्मसांकर्यं स्यादिति ध्येयम्। चतुर्विधस्थूलशरीरव्यष्ट्युपहितं चैतन्यं दर्शयति। एतद्व्यष्ट्युपहितमिति। एतेषां चतुर्विधशरीराणां या व्यष्टिः तत्तच्छरीरव्यक्तिः तदुपहितं चैतन्यमित्यर्थः। अस्य। विश्वचैतन्यस्य। जाग्रदिति। जाग्रद्दशायां विद्यमानत्वादित्यर्थः। तथाचाऽज्ञानव्यष्ट्युपहितः प्राज्ञः। व्यष्टिलिंगशरीरोपहितचैतन्यं तैजसः। व्यष्टिस्थूलशरीरोपहितश्च विश्व इति ध्येयम्। तदानीमिति। जाग्रदवस्थायामित्य॰।

व्यष्टिः स्थूलशरीरमन्नविकारत्वादेव हेतोरन्नमयकोशो जाग्रदिति चोच्यते। तदानीमेतौ विश्ववैश्वानरौ दिग्वातार्कवरुणाश्विभिः क्रमान्नियन्त्रितेन श्रोत्रादीन्द्रियपञ्चकेन क्रमाच्छब्दस्पर्शरूपरस-गन्धानग्नीन्द्रोपेन्द्रयमप्रजापतिभिः क्रमान्नियन्त्रितेन वागादीन्द्रिय पञ्चकेन वचनादानगमनविसर्गानन्दांश्चन्द्रचतुर्मुखशङ्कराच्युतैः क्रमान्नियन्त्रितेन मनोबुद्ध्यहङ्कारचित्ताख्येनान्तरिन्द्रियचतुष्केण क्रमात् सङ्कल्पनिश्चयाहङ्कार्यचैत्तांश्च सर्वानेतान् स्थूलविषयाननुभवतो "जागरितस्थानोबहिःप्रज्ञः" इत्यादिश्रुतेः। अत्राप्यनयोः

अन्न के विकार के कारण ही अन्नमयकोश एवं जाग्रत् कहलाती है। जाग्रत् अवस्था में ही ये दोनों विश्व और वैश्वानर दिक्-वात ( वायु ) अर्क ( सूर्य ) वरुण और अश्विनीकुमार इन देवताओं से क्रम से नियन्त्रित जो श्रोत्र आदि पाँच ज्ञानेन्द्रिय अर्थात् श्रोत्र, त्वक्, चक्षु, रसन—और घ्राण, इनसे ग्राह्य जो क्रमशः शब्द-स्पर्श-रूप-रस-गन्ध – इनका अनुभव करते हैं। इसी प्रकार अग्नि-इन्द्र-उपेन्द्र-यम तथा प्रजापति इन देवताओं से क्रम से नियन्त्रित जो वागादि इन्द्रिय पंचक अर्थात् वाक्, पाणि, पाद, पायु तथा उपस्थ, इनसे क्रमशः वचन ( बोलना ) आदान ( लेना ) गमन ( चलना-फिरना ) विसर्ग ( मलत्याग ) एवं आनन्द का अनुभव करते हैं। एवं चन्द्र-चतुर्मुख ( ब्रह्मा ) शङ्कर—तथा अच्युत ( विष्णु ) इन देवताओं के द्वारा क्रम से नियन्त्रित जो मन-बुद्धि-अहङ्कार—तथा चित्त, इन चार अन्तरिन्द्रियों के द्वारा होनेवाले जो सङ्कल्प-निश्चय-अहङ्कार तथा स्मरणस्वरूप इन सब स्थूल विषयों का अनुभव

---

द्वितीयान्तानां गन्धादीत्यादीनां अनुभवत इत्यनेनाऽन्वयः। अत्रापि प्रमाणमाह। जागरितस्थान इति। जागरितं स्थानं "अभिमानविषयीभूतं" यस्य स तथा। बहिः—स्वात्मव्यतिरिक्तशब्दादिविषयेषु प्रज्ञा—बुद्धिवृत्ति रूपा यस्य स बहिः प्रज्ञः। आदिना स्थूलभुग्वैश्वानर इति वाक्यशेषपरिग्रहः। विश्ववैश्वानरयोस्तदुपाध्योश्च पूर्ववदभेदं साधयति। अत्रापीति। वनवृक्षवत्स्थूलव्यष्टिसमष्ट्योरभेदः, तदुपहितविश्ववैश्वानरयोश्च तदवच्छिन्नाकाशवदभेद इति योजना। अवान्तरप्रपञ्चमभिधाय महाप्रपञ्चं दर्शयति।

स्थूलव्यष्टिसमष्ट्योस्तदुपहित विश्ववैश्वानरयोश्च वनवृक्षवत्तदवच्छिन्नाकाशवच्च जलाशयजलवत्तद्गतप्रतिबिम्बाकाशवच्च पूर्ववदभेदः। एवं पंचीकृतपंचभूतेभ्यः स्थूलप्रपञ्चोत्पत्तिः।

एतेषां स्थूलसूक्ष्मकारणप्रपञ्चानामपि समष्टिरेको महान् प्रपञ्चो भवति। यथाऽवान्तरवनानां समष्टिरेकं महद्वनं भवति यथा वाऽवान्तरजलाशयानां समष्टिरेको महान् जलाशयः। एतदुपहितं वैश्वानरादीश्वरपर्यन्तं चैतन्यमप्यवान्तरवनाव-

करते हैं। इसमें श्रुति भी प्रमाण है—"जाग्रत अवस्था में विश्व तथा वैश्वानर बाह्य स्थूल विषयों का अनुभव करते हैं।"

यहाँ भी स्थूल शरीर की इन व्यष्टि और समष्टि का एवं उनसे उपहित जो चैतन्य विश्व और वैश्वानर उनका वन-वृक्ष की तरह तथा उनसे अवच्छिन्न आकाश की तरह, एवं जलाशय—जल की तरह तथा उनमें प्रतिबिम्ब आकाश की तरह सर्वथा पहिले की तरह अभेद है। इस प्रकार पंचीकृत पाँच महाभूतों से स्थूल प्रपंच की उत्पत्ति होती है।

इन स्थल-सूक्ष्म—तथा कारण प्रपंचों (शरीरों) की समष्टि को एक महाप्रपंच कहते हैं। जैसे अवान्तरवानों की अर्थात् तत्तद्वृक्षों के जो अलग-अलग वन हैं उनकी समष्टि को एक महावन कहते हैं। एवं विभिन्न जलाशयों के परस्पर में मिल जाने पर उनकी समष्टि (समुदाय) को जैसे एक महान् जलाशय कहते हैं। और इस महाप्रपंचरूप उपाधि से विशिष्ट वैश्वानर से

---

एतेषामिति। एतदुपहितमिति। स्थूलसूक्ष्मकारणशरीरोपहितमित्यर्थः। वैश्वानरादीश्वरपर्यन्तमिति। वैश्वानरादिविश्वपर्यन्तमित्यर्थः। वैश्वानरहिरण्यगर्भपरमेश्वरविश्वतैजसप्राज्ञचैतन्यमिति यावत्। एकमेवेत्यनेनाऽन्वयः। तत्र दृष्टान्तमाह। अवान्तरवनावच्छिन्नाकाशवदित्यादि। चैतन्यप्रपञ्चयोर्भेदे "सर्वंखल्विदंब्रह्मेति" श्रुतिविरोधं परिहरति। आभ्यामिति। उक्तमहाप्रपञ्चतदवच्छिन्नचैतन्याभ्यामित्यर्थः। तप्तायःपिण्डवदविविक्तमिति। तप्तायःपिन्डवदन्योन्याध्यासापन्नमित्यर्थः।

च्छिन्नाकाशवदवान्तर जलाशयगतप्रतिबिम्बाकाशवच्चैकमेव। आभ्यां महाप्रपञ्चतदुपहितचैतन्याभ्यां तप्तायः पिण्डवदविविक्तं सदनुपहितं चैतन्यं "सर्वं खल्विदं ब्रह्म" इति वाक्यस्य वाच्यं भवति, विविक्तं सल्लक्ष्यमपि भवति।

एवं वस्तुन्यवस्त्वारोपोऽध्यारोपः सामान्येन प्रदर्शितः।

इदानीं प्रत्यगात्मनीदमिदमयमयमारोपयतीति विशेषत उच्यते। अतिप्राकृतस्तु "आत्मा वै जायते पुत्र" इत्यादिश्रुतेः

लेकर ईश्वर पर्यन्त चैतन्य भी उसी प्रकार हो एक माना गया है जैसे समस्त अवान्तरवनों से अवच्छिन्न ( संयुक्त ) आकाश, तथा सम्पूर्ण अलग-अलग जलाशयों में प्रतिबिम्बित आकाश एक ही है। महाप्रपंच तथा महाप्रपंचरूप उपाधि से अवच्छिन्न जो चैतन्य इन दोनों से अभिन्न होता हुआ जो अनुपहित ( शुद्ध ) चैतन्य है वही "सर्वं खल्विदं ब्रह्म" इस वाक्य का वाच्य ब्रह्मरूप अर्थ कहलाता है। और विविक्त ( भिन्न ) होता हुआ वही चैतन्य लक्ष्मीभूत ब्रह्मरूप अर्थ कहलाता है। जैसे अग्नितादात्म्याध्यासित तप्त लोहा "अयो दहति" इस वाक्य का वाच्य अर्थ बन जाता है और अग्नि का तादात्म्य न होने पर वही लोहा उक्त वाक्य का लक्ष्य कहलाता है। इस प्रकार सामान्यतः ब्रह्मरूप वस्तु में अवस्तुभूत जगत् का आरोपरूप अध्यारोप दिखला दिया है।

अब हम प्रत्यगात्मा में 'यह आत्मा है' 'यह आत्मा है' यह आरोप विशेष रूप से किस प्रकार होता है इस बात को बतलाते हैं। अतिप्राकृत ( स्थूल बुद्धि वाले ) कहते हैं कि 'पुत्र ही आत्मा है' इस श्रुति को इस विषय में प्रमाण देते हैं, तथा कहते हैं कि अपने समान ही अपने पुत्र में भी प्रेमदर्शन होता है।

---

अनुपहितं शुद्धचैतन्यम्। विविक्तं सदिति। महाप्रपञ्चतदुपहितचैतन्याभ्यां विविक्तं-विवेकेन अन्वयव्यतिरेकाभ्यां पृथक् कृत्य निश्चितं सदखण्ड चैतन्यमित्यर्थः। ईश्वरचैतन्ये "तत्पदवाच्येऽ" ध्यारोपमुपसंहरति। एवमिति। वस्तुनि। ईश्वरचैतन्ये।

इदानीमिति। सामान्यतोऽध्यारोपनिरूपणानन्तरमित्यर्थः। विशेषत उच्यते इत्यन्वयः। ईश्वरचैतन्येऽ ध्यारोपप्रकारं प्रदर्श्य त्वं पदार्थेऽध्यारोप-

स्वस्मिन्निव स्वपुत्रेऽपि प्रेमदर्शनात् पुत्रे पुष्टे नष्टे चाहमेव पुष्टो नष्टश्चेत्याद्यनुभवात् च पुत्र आत्मेति वदति।

चार्वाकस्तु "स वा एष पुरुषोऽन्नरसमयः" इत्यादिश्रुतेः प्रदीप्तगृहात् स्वपुत्रं परित्यज्यापि स्वस्य निर्गमदर्शनात् "स्थूलोऽहम्" "कृशोऽहम्" इत्याद्यनुभवाच्च स्थूलशरीरमात्मेति वदति।

अपरश्चार्वाकः "ते ह प्राणाः प्रजापतिं पितरमेत्योचुः"

तथा पुत्र के पुष्ट या नष्ट हो जाने पर मैं ही पुष्ट अथवा नष्ट हुवा हूँ ऐसा अनुभव भी होता है अतः पुत्र ही आत्मा है।

चार्वाक कहता है कि "अन्नरसमय वह यह पुरुष ही आत्मा है" इत्यादि श्रुति से स्थूल शरीर ही आत्मा सिद्ध होता है। घर में आग लग जाने पर प्रदीप्त घर से अपने पुत्र को भी वहीं छोड़कर केवल शरीर की रक्षा के लिये अपने ही निकल भागता है। तथा 'स्थूलोऽहम्' 'कृशोऽहम्' इस अनुभव से स्थूलशरीर को ही आत्मत्व सिद्ध हो रहा है लोकायत चार्वाक कहता है कि "वे प्राण (इन्द्रियाँ) ब्रह्मा के पास जाकर बोलीं" इस श्रुति से इन्द्रियों को ही आत्मत्व सिद्ध हो रहा है। दूसरी बात यह है कि इन्द्रियों के न होने पर शरीर चलने-फिरने में भी असमर्थ हो जाता है, इसके अतिरिक्त "मैं काणा हूँ—मैं बधिर हूँ" इत्यादि अनुभव से भी इन्द्रियाँ ही आत्मा हैं।

---

प्रकारं प्रदर्शयतीति भावः। प्रत्यगात्मनि। जीवात्मनि। प्रत्यक्त्वं सर्वान्तरत्वम्। इदमिदमिति। वक्ष्यमाणपुत्रत्वादीत्यर्थः। अति-प्राकृतस्त्विति। पुत्र आत्मेतिवदतीत्यन्वयः। अत्र श्रुतिप्रमाणमाह। आत्मावै इत्यादीना। सिद्धान्तिना श्रुतिप्रामाण्याङ्गीकारेण तन्मतेन तदुपन्यासः। प्राकृतानां श्रुत्युपन्यासस्तु न युक्तः, तैस्तत्प्रामाण्यानंगीरा-द्विति ध्येयम्। एवमग्रेपि। स्वस्मिन्निवेत्यादि। यथा स्वशरीरे प्रेमदर्श-नादात्मत्वभ्रमः, एवं स्वपुत्रादीनां शरीरेपि प्रेमदर्शनादात्मत्वभ्रमः इत्यर्थः! अत्रानुरूपमनुभवमप्याह। पुत्रे नष्टे इति। मतान्तरमाह।

इत्यादिश्रुतेः इन्द्रियाणामभावे शरीरचलनाभावात्, "काणोऽहम्" "वधिरोऽहम्" इत्याद्यनुभवाच्च इन्द्रियाण्यात्मेति वदति।

अन्यस्तु चार्वाकः "अन्योऽन्तर आत्मा प्राणमयः" इत्यादि श्रुतेः, प्राणाभावे इन्द्रियादिचलनायोगात् "अहमशनायावान्" "अहं पिपासावान्" इत्याद्यनुभवाच्च प्राण आत्मेति वदति।

अन्यस्तु चार्वाकः "अन्योऽन्तर आत्मा मनोमयः" इत्यादि श्रुते मनसि सुप्ते प्राणादेरभावात् "अहं सङ्कल्पवान्" "अहं विकल्पवान्" इत्याद्यनुभवाच्च मन आत्मा इति वदति।

बौद्धस्तु "अन्योऽन्तर आत्मा विज्ञानमयः" इत्यादिश्रुतेः, कर्त्तुरभावे करणस्य शक्त्य भावात् "अहं कर्त्ता" "अहं भोक्ता" इत्याद्यनुभवाच्च बुद्धिरात्मेति वदति।

प्राभाकर-तार्किकौ तु "अन्योऽन्तर आत्मा आनन्दमयः"

प्राणात्मकवादी चार्वाक कहता है कि "इन सबसे अन्य ही आत्मा प्राणमय है" इस श्रुति से प्राण ही आत्मा है यह सिद्ध होता है। दूसरी बात यह है कि शरीर में प्राण न रहने पर इन्द्रियाँ भी निर्व्यापार हो जाती हैं। तथा मैं भूखा हूँ मैं प्यासा हूँ इस अनुभव से भी प्राण ही आत्मा है यह स्पष्ट है।

मन को आत्मावादी चार्वाक कहता है कि "शरीर-इन्द्रिय-प्राण इनसे अन्य मन ही आत्मा है" मन के सो जाने पर प्राण आदि अपना कार्य सम्पादन में असमर्थ हो जाते हैं। तथा "मैं संकल्प करता हूँ" "मैं विकल्प करता हूँ" इत्यादि अनुभव से भी मन ही आत्मा सिद्ध हो रहा है।

बौद्ध ( योगाचार कहता है कि "इन सबसे अन्य ही विज्ञानमय आत्मा है" इस श्रुति से क्षणिक विज्ञान ( बुद्धि ) आत्मा है। तथा कर्त्ता के न होने पर करण में कार्य के उत्पादन की शक्ति का अभाव है। एवं "मैं कर्त्ता हूँ" मैं भोक्ता हूँ" इस अनुभव से बुद्धि आत्मा है।

प्राभाकर-तार्किक इन दोनों का कथन है कि "इन सबसे अन्य आनन्द-स्वरूप आत्मा है" इस श्रुति से, तथा सुषुप्ति अवस्था में अज्ञान में बुद्धि आदि

---

चार्वाकस्त्विति। स्थूलशरीरमात्मेति वदतीत्यन्वयः। विशेषाध्यारप

इत्यादिश्रुतेः, सुषुप्तौ बुद्धयादीनामज्ञाने लयदर्शनात्, "अहमज्ञः" अहमज्ञानीत्याद्यनुभवाच्चाऽज्ञानमात्मा इति वदतः ।

भाट्टस्तु "प्रज्ञानघन एवानन्दमयः" इत्यादिश्रुतेः, सुषुप्तौ प्रकाशाप्रकाशसद्भावात् "मामहं नजानामि" इत्याद्यनुभवाच्चाज्ञानोपहितं चैतन्यमात्मा इति वदति ।

अपरोबौद्धः "असदेवेदमग्र आसीत्" इत्यादिश्रुतेः, सुषुप्तौ सर्वाभावादहं सुषुप्तौ नासमित्युत्थितस्य स्वाभावपरामर्शविषयानुभवाच्च शून्यमात्मेति वदति ।

एतेषां पुत्रादीनां शून्यपर्यन्तानामनात्मत्व मुच्यते । एतैरतिप्राकृतादिवादिभिरुक्तेषु श्रुतियुक्त्यनुभवाभासेषु पूर्वपूर्वोक्तश्रुति-

का लय हो जाता है, एवं "मैं अज्ञानी हूँ" इस अनुभव से भी अज्ञान ही आत्मा है ।

भट्ट का कहना है कि—'प्रज्ञानघन तथा आनन्दमय ही आत्मा है" इस श्रुति से, तथा सुषुप्ति में प्रकाश तथा अप्रकाश के सद्भाव से ( अर्थात् 'सुखमहमस्वाप्सं न किंचिदवेदिषम्' यह जो शयन मे उठने के बाद परामर्श होता है—इस परामर्श के अन्तर्गत 'सुखमहमस्वाप्सम्' इससे प्रकाश का सद्भाव सिद्ध है, और 'न किंचिदवेदिषम्' इससे अप्रकाश का सद्भाव सिद्ध है ) एवं "मामहं न जानामि" इस अनुभव से अज्ञान से उपहित चैतन्य ही आत्मा सिद्ध हो रहा है ।

माध्यमिक ( बौद्ध ) कहता है कि "यह जगत् पहिले असत ( शून्य ) था" इस श्रुति से, तथा सुषुप्ति अवस्था में नहीं था" इस प्रकार से अपने अस्तित्वाभावविषयकपरामर्शानुभव से शून्य ही आत्मा है यह सिद्ध है ।

---

प्रदर्श्य तस्याऽऽरोपत्वं प्रदर्शयति । एतेषामिति । तत्र पूर्वपूर्ववादिमतमुत्तरोत्तरवादिमतेन दूषितमिति पुत्रादिशून्यपर्यन्तानामनात्मत्वं स्फुटमेवेत्याह । एतैरिति । श्रुतियुक्त्यनुभवाभासेष्विति । श्रुतिश्च युक्तिश्चाऽनुभवश्चेति श्रुतियुक्त्यनुभवास्तेषामाभासेनेत्यर्थः । श्रुत्याभासेषु युक्त्याभासेषु-अनुभवाभासेषु इत्यर्थः एतेषामाभासत्वं तत्र दर्शितम् । प्रकारान्तरेण

युक्त्यनुभवाभासानामुत्तरोत्तरश्रुतियुक्त्यनुभवाभासैरात्मत्वबाधदर्शनात् पुत्रादीना मनात्मत्वं स्पष्टमेवेति ।

किञ्च "प्रत्यक्" "अस्थूलः" "अचक्षुः" "अप्राण" "अमनाः" "अकर्त्ता" "चैतन्यं" "चिन्मात्रं" सदित्यादिप्रबलश्रुतिविरोधात् अस्य पुत्रादिशून्यपर्यन्तस्य जड़स्य चैतन्यभास्यत्वेन घटादिवदनित्यत्वात्, "अहं ब्रह्म" इति विद्वदनुभवप्राबल्याच्च तत्तच्छ्रुतियुक्त्यनुभवाभासानां बाधितत्वादपि पुत्रादिशून्यपर्यन्तमखिलमनात्मैव । अतस्तत्तद्भासकं नित्य-शुद्ध-बुद्ध-मुक्त-सत्यस्वभावं प्रत्यक् चैतन्यमेवात्मवस्त्विति वेदान्तविद्वदनुभवः । एवमध्यारोपः ।

इस पुत्र से लेकर शून्य पर्यन्तों को किसी को भी आत्मा नहीं कहा जा सकता है, क्योंकि इन अतिप्राकृत आदिवादियों के द्वारा पहिले कहे हुये श्रुति-युक्ति-अनुभवरूप प्रमाणाभासों का उत्तरोत्तर श्रुति-युक्ति अनुभवरूप प्रमाणाभासों से बाध देखने में आता है इसलिये पुत्र आदि को अनात्मत्व स्पष्ट ही है । दूसरी बात यह है कि पूर्वोक्त श्रुति-युक्तियों के आधार पर यदि पुत्रादिकों को आत्मा मानेंगे तो "आत्मा स्थूल नहीं है, चक्षु आत्मा नहीं है, प्राण तथा मन भी आत्मा नहीं है, एवं आत्मा कर्त्ता भी नहीं है किन्तु चेतन सत्यस्वरूप ही आत्मा है" इत्यादि प्रबल श्रुतियों से विरोध होने से तथा पुत्र से लेकर शून्य पर्यन्त सब ही चैतन्य से भासित होने के नाते घटादि की तरह अनित्य हैं, तथा अहंब्रह्म यह विद्वानों ( ज्ञानियों ) को प्रबल अनुभव भी होता है ( न कि पुत्र से लेकर जड़पर्यन्त को आत्मत्वानुभव होता है ) अतः पूर्वोक्त तत्तत् श्रुति-युक्ति-अनुभवरूप प्रमाणाभासों का बाध हो जाने के नाते पुत्र से लेकर शून्य पर्यन्त सबको अनात्मा ही कहना होगा । इसलिये पुत्र से लेकर शून्यपर्यन्त का भासक जो नित्य-शुद्ध-बुद्ध-मुक्त-सत्यस्वरूप प्रत्यक् चैतन्य ही आत्मा है ऐसा वेदान्त

---

पुत्रादीनामनात्मत्वमाह । किंचेति । प्रत्यक्त्वं नाम सर्वान्तरत्वम् । एतेन पुत्रस्याऽनात्मत्वं प्रतिपादितम्, तस्य पराक्त्वात् । अस्थूल इत्यनेन शरीरस्य, अचक्षुरित्यनेनेन्द्रियाणां, अप्राण इत्यनेन प्राणस्य, अमना-

अपवादोनाम रज्जुविवर्त्तस्य सर्पस्य रज्जुमात्रत्ववत् वस्तुविवर्त्तस्यावस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम् । तदुक्तम् "सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः । अतत्त्वतोऽन्यथाप्रथा

वेत्ताओं का अनुभव है । इस प्रकार का यह वस्तु में अवस्तु का आरोपस्वरूप अध्यारोप दिखला दिया है ।

अपवाद नाम बाध का है । रज्जु का विवर्त्त अर्थात् रज्जु का जो अपने स्वरूप का परित्याग न करते हुवे रूपान्तर ( सर्परूप ) में भासमान हो जाना यही है रज्जु का विवर्त्त सर्प, और उस सर्प की जो अधिष्ठान भूत केवल रज्जुरूप से स्थिति हो जाना यही अपवाद है । इसी प्रकार ब्रह्मरूप वस्तु के विवर्त्त अज्ञानादि प्रपंच की मिथ्याप्रतीति को सर्वथा दूर करके केवल ब्रह्मरूप सत्य वस्तु का भान होना ही अपवाद है । वही कहा है—तत्त्वतः=तथार्थतः, जो अन्यथा प्रथा ( अपने रूप को छोड़कर रूपान्तर में परिणत हो जाना ) यही विकार कहा है । जैसे दूध वास्तविक में अपने रूप को छोड़कर दधिरूप में परिणत हो जाता है । और अतत्त्वतः=अयथार्थरूप से अन्यथाप्रथा ( अपने रूप को न छोड़कर

---

इत्यनेनमनसः, अकर्ता इत्यनेन बुद्धेः, चैतन्यमित्यनेन जड़स्याऽज्ञानस्य, चिन्मात्रमित्यनेन द्रव्यबोधात्मकस्य, सदित्यनेनाऽसतोऽनात्मत्वं दर्शितम् । प्रबलेति । उपक्रमोपसंहारादिना प्राबल्यनिश्चयादिति . भावः । चैतन्यभास्यत्वेति । पुत्रादिकं नात्मा जड़त्वात्, चैतन्यभास्यत्वाच्च घटवदित्यनुमानमुक्तं भवति । अतः पुत्रादीनामनात्मत्वात् । तत्तद्भासकम् पुत्रादिभासकम् । तथा च तत्तद्वादिनां पुत्रादौ आत्मत्वोक्तिरारोपमात्रमिति भावः । विशेषाऽध्यारोपप्रकरणमुपसंहरति । एवमिति ।

आत्मवस्तुनि अवस्तुनोमिथ्याप्रपंचस्य सामान्यतोविशेषतश्चाध्यारोपप्रकारं प्रदर्श्याऽपवादं निरूपयति । अपवादोनामेति । अपवादोनाशः, स च कारणरूपेणाऽवस्थानम् । प्रकृते च परमात्मनि तद्विवर्तभूताऽज्ञानादिमिथ्याप्रपञ्चस्य चिद्वस्तुमात्रावशेषतयाऽवस्थानम् । तत्र लौकिकदृष्टान्तमाह । रज्जुविवर्तस्येति । रज्ज्ववच्छिन्नचैतन्यविवर्तस्येत्यर्थः । रज्जुमात्रत्ववदिति । तथा चेयं रज्जुर्न सर्प इति बाधनिश्चयोऽपवाद इति-

विवर्त्त इत्युदीरितः। तथाहि—एतद्भोगायतनं चतुर्विधसकल-स्थूलशरीरजातं भोग्यरूपान्नपानादिकं एतदायतनभूतभूरादिचतुर्दशभुवनानि, एतदायतनभूतं ब्रह्माण्डं चैतत् सर्वमेतेषां कारणरूपं पञ्चीकृतभूतमात्रं भवति। एतानि शब्दादिविषयसहितानि पञ्चीकृतानि भूतानि, सूक्ष्मशरीरजातं चैतत् सर्वमेतेषां कारण-रूपापञ्चीकृत भूतमात्रं भवति। एतानि सत्त्वादिगुणसहितान्य-पञ्चीकृतान्युत्पत्तिव्युत्क्रमेणैतत्कारणभूताज्ञानोपहित चैतन्यमात्रं

रूपान्तर से प्रतीत होना ) यही विवर्त्त है। जैसे रज्जु अपने स्वरूप को न छोड़कर सर्परूप से भासने लगती है। प्रश्न—अज्ञानादि सकल प्रपंच विषयक भ्रम के दूर हो जाने के पश्चात् यह समस्त प्रपंच अपने-अपने कारण में अन्तर्भूत होता हुवा उस चिदात्मब्रह्म में कैसे लीन होता है। उत्तर—सुख-दुःख आदि भोगों का आयतन ( स्थान ) जो यह चतुर्विधस्थूलशरीर, तथा चतुर्विधस्थूलशरीर के योग्यस्वरूप जो अन्न-पान आदि, और इन सबका आश्रयभूत जो भूरादि चतुर्दश-भुवन, और इनका आधारभूत जो यह सब ब्रह्माण्ड, इन सबके कारण पंचीकृत पंचमहाभूतमात्र ही हैं। और ये शब्दादिविषयसहित पंचीकृतपंचमहाभूत और सूक्ष्मशरीर इन सबके कारण अपंचीकृत पंचमहाभूत हैं ( अर्थात् पहिले कहे

---

भावः। वस्तुविवर्तस्येति। चैतन्यविवर्तस्येत्यर्थः। वस्तुमात्रत्वमिति। चैतन्यमात्रत्वमित्यर्थः। अत्रेदंबोध्यं—वस्तुनोऽन्यथाभावो द्विधा भवति, परिणामभावो विवर्तभावश्च—तत्राऽऽद्यः वस्तुनः स्वस्वरूपं परित्यज्य रूपान्तरापत्तिः। द्वितीयस्तु—स्वस्वरूपाऽपरित्यागेन रूपान्तरापत्तिः। तदेवाह। तदुक्तमिति। अपवाद एव बाधो—विलापनमिति चोच्यते। स च शास्त्रीयबाध—यौक्तिकबाध—प्रत्यक्षबाधभेदात्त्रिविधः। तत्र यौक्तिकबाधस्य क्रममाह। तथाहीत्यादिना। एतत्सर्वमिति। यथा घटो मृत्स्वरूपः तत्कार्यत्वात् तथैतदपीत्यर्थः। पंचीकृतभूतमात्रं भवतीति। तथा च स्थूलशरीरमारभ्य ब्रह्माण्डपर्यन्तस्य पंचीकृतभूतकार्यत्वात्तस्य पंचीकृतभूतेषु विलापनमिति भावः। एतेषामिति। पंचीकृतभूतानां सूक्ष्मशरीजातस्य

भवन्ति। एतदज्ञानमज्ञानोपहितं चैतन्यं चेश्वरादिकमेतदाधारभूतानुपहित चैतन्यरूपं तुरीयं ब्रह्ममात्रं भवति।

आभ्यामध्यारोपापवादाभ्यां तत्त्वं पदार्थशोधनमपि सिद्धं भवति। तथाहि—अज्ञानादिसमष्टिः एतदुपहितं सर्वज्ञत्वादिविशिष्टं चैतन्यम्, एतदनुपहितं चैतन्यं चेतत्त्रयं तप्तायः पिण्डवदेकत्वे-

हुवे समस्त कार्य अपने-अपने कारणों में लीन हो जाते हैं) और यह अज्ञान तथा अज्ञानोपहित चैतन्य ईश्वर आदि भी अपने कारण तथा आधारभूत अनुपहित चैतन्यरूप तुरीयब्रह्म में लीन हो जाते हैं।

इन (पूर्वोक्त) अध्यारोप तथा अपवाद इन दोनों न्यायों में कथितयुक्तियों के द्वारा 'तत्' और 'त्वम्' इन दोनों पदार्थों का संशोधन भी अच्छी प्रकार हो जाता है। उसी को स्पष्ट करते हैं—तथाहि—इत्यादि से। अज्ञानादि समष्टि जो कि अज्ञान, सूक्ष्मशरीर तथा स्थूलशरीर की समष्टिरूप है और उसमें उपहित जो सर्वज्ञत्वादिविशिष्ट चैतन्य (ईश्वर-हिरण्यगर्भ—तथा विराट, एवं उससे

---

चेत्यर्थः। उत्पत्तिव्युत्क्रमणेति। गन्धतन्मात्रं—रसतन्मात्रं भवति। तच्च रूपतन्मात्रे विलीयते, तच्च स्पर्शतन्मात्रे, तच्च शब्दतन्मात्रेऽन्मकाकाशे, आकाशंचाऽज्ञाने, अज्ञानं च चिन्मात्रे विलीयते, एवं च चैतन्यमात्रमवशिष्यते इति भावः। एतदाधारभूतेति। एतदधिष्ठानभूतेत्यर्थः। फलितार्थं दर्शयति। आभ्यामिति। तत्त्वंपदार्थशोधनमपीति। "तत्त्वमसी" ति महावाक्यघटकेत्यादिः। अध्यारोपापवादनिरूपणस्य प्रयोजनम्, ब्रह्मात्मचैतन्यस्याऽद्वितीयताप्रतिपादनं पदार्थशुद्धिस्त्वान्तर्फलमिति सूचयितुमपिकारः। अत्र तत्पदस्य द्वावर्थौ, वाच्यर्थो लक्ष्यार्थश्च। एवं त्वं पदस्यापि। तदुभयं विभज्य दर्शयति। तथाहीत्यादिना। तत्पदार्थं शोधयति। अज्ञानादीति। अज्ञानमादिर्यस्याः स्थूलसूक्ष्मभूतायाः समष्टेः साऽज्ञानादिः अज्ञानादिश्चासौ समष्टिश्चेति कर्मधारयः। एतदुपहितमिति। अज्ञानादिसमष्ट्युपहितमित्यर्थः। सर्वज्ञत्वादीति। आदिना सर्वनियन्तृत्वाद्युच्यते। चैतन्यमिति।

नावभासमानं तत्पदवाच्यार्थो भवति। एतदुपाध्युपहिताधारभूतं मनुपहितं चैतन्यं तत्पदलक्ष्यार्थो भवति।

६७ अज्ञानादिव्यष्टिः, एतदुपहिताल्पज्ञत्वादि विशिष्टं चैतन्यं, एतदनुपहितं चैतन्यत्रयं तप्तायःपिंडवदेकत्वेनावभासमानं त्वंपद-

अनुपहित जो चैतन्य ( तुरीय ब्रह्म ) ये तीनों तप्त हुवे अयःपिण्ड ( लोहे ) के समान एकत्वेन अवभासित होकर 'तत्' पद के वाच्यार्थ कहलाते हैं। और अज्ञानादि की समष्टिरूप उपाधि एवं उससे उपहित ईश्वर—चैतन्य का आधार-भूत जो अनुपहित तुरीय चैतन्य ( तुरीय ब्रह्म ) वह 'तत्' पद का लक्ष्यार्थ होता है।

अज्ञानादि व्यष्टि अर्थात् अज्ञान; सूक्ष्मशरीर–स्थूल शरीर–कारणशरीर, इन शरीरों की जो व्यष्टि, और इस व्याष्टिरूप उपाधि से विशिष्ट जो अल्पज्ञ-त्वादिविशिष्ट चैतन्य ( प्राज्ञ-तैजस-और विश्व ) तथा अनुपहित जो चैतन्य ( तुरीयब्रह्मरूपचैतन्य ) ये तीनों तप्त अयः पिण्ड की तरह एकत्वेन भासमान होकर त्वं पद के वाच्य होते हैं। एवं अज्ञानादि की व्यष्टि रुप जो उपाधि, तथा

---

ईश्वरचैतन्यमित्यर्थः। तस्य तत्पदवाच्यत्वात्। अयं भावः समष्टिस्थूल-शरीरं, समष्टिसूक्ष्मशरीरं तत्कारणं समष्ट्यज्ञानं तदुपहितविराड्हिरण्यग-र्भेश्वरचैतन्यं एतदुपाध्युपहिताऽधिष्ठानभूताऽनुपहितचैतन्यमेतत्त्रयं तप्तायः पिण्डवदविविक्तमेकत्वेनाऽवभासमानं तत्पदवाच्यार्थ इति। तत्पदलक्ष्या-र्थमाह। एतदुपाध्युपहितेति। अज्ञानावच्छिन्नेत्यर्थः। आधारभूत-मिति। अधिष्ठानभूतमित्यर्थः। अनुपहितमिति। शुद्धमिति यावत्। त्वंपदवाच्यार्थमाह। अज्ञानादिव्यष्टिरिति। विग्रहः पूर्ववत्। आदिना स्थूलसूक्ष्मभूतायाः व्यष्टेः परिग्रहः। एतदुपहितेति। अज्ञानादिव्यष्ट्यु-पहितेत्यर्थः। अल्पज्ञत्वादीति आदिनाऽनीश्वरत्वपरिग्रहः चैतन्य-मिति। प्राज्ञविश्वतैजसा इत्यर्थः। एकत्वेन भासमानमिति। परस्पर तादात्म्याध्यासेनाऽभिन्नत्वेन भासमानमित्यर्थः। चैतन्यमिति। जीवचैत-न्यमित्यर्थः। अयं भावः—व्यष्टिस्थूलशरीरं, व्यष्टिसूक्ष्मशरीरं, तत्कारणं-व्यष्ट्यज्ञानं, तदुपहितविश्वतैजसप्राज्ञचैतन्यं, एतदुपाध्युपहिताधिष्ठान-

वाच्यार्थो भवति। एतदुपाध्युपहिताधारभूतमनुपहितं प्रत्यगानन्दरूपं तुरीयं चैतन्यं त्वंपदलक्ष्यार्थोभवति॥

अथ महावाक्यार्थो वर्ण्यते—इदं तत्त्वमसि वाक्यं सम्बन्धत्रयेणाखण्डार्थबोधकं भवति। सम्बन्धत्रयं नाम पदयोः सामाना-

उस उपाधि से विशिष्ट जो जीव चैतन्य, एवं उपहित (जीव-चैतन्य) का आधारभूत जो अनुपहित प्रत्यक्-आनन्दरूप तुरीय चैतन्य वह त्वं पद का लक्ष्यार्थ होता है।

महावाक्यार्थ का विचार करते हैं—'तत्त्वमसि' यह वाक्य तीन प्रकार के सम्बन्धों के द्वारा अखण्ड अर्थ (स्वप्रकाशचिदात्मब्रह्म) का बोधन करता है।

---

भूतानुपहितचैतन्यमेतत्त्रयं तप्तायःपिण्डवदविविक्तमेकत्वेनाऽवभासमानं त्वं पदवाच्यार्थ इति। त्वं पदलक्ष्यार्थमाह। एतदुपाध्युपहितेति। अन्तःकरणावच्छिन्नेत्यर्थः। आधारभूतमिति। अधिष्ठानभूतमित्यर्थः। अनुपहितमिति। शुद्धमित्यर्थः। पदार्थज्ञानं वाक्यार्थबोधे कारणमतः पदार्थनिरूपणानन्तरं वाक्यार्थं निरूपयति। अथेत्यादि। संसृष्टार्थविषयकाऽखण्डार्थविषयकभेदेन द्विविधोबोधः। संसृष्टार्थविषयकत्वं च संसर्गावगाहित्वम्। अखण्डार्थविषयकत्वं च संसर्गानवगाहित्वम्। एवं संसृष्टार्थविषयकबोधजनकाऽखण्डार्थविषयकबोधजनकभेदेन वाक्यमपि द्विविधम्। संसृष्टार्थविषयकबोधजनकमाद्यम्। यथा गामानयेत्यादि। संसर्गानवगाहिबोधजनकं द्वितीयम्। यथा प्रकृष्टप्रकाशश्चन्द्र इत्यादि। तथा हि—अस्मिञ्ज्योतिर्मंडले कतमश्चन्द्र इति चन्द्रस्वरूपजिज्ञासया प्रश्ने, कश्चिदाह। "यः प्रकृष्टप्रकाशः स चन्द्रः" इति। तथा चैतद्वाक्यं चन्द्रस्वरूपमात्रं बोधयति। न संसर्गं, प्रश्नोत्तरयोर्वैरूप्यापत्तेः। सोयं देवदत्त इति वाक्यमपि अखण्डार्थबोधकम्। एवं "तत्त्वमसि" इति वाक्यमपि स्वरूप "चैतन्य" मात्रबोधजनकत्वेनाऽखण्डार्थबोधकमित्याह। अखण्डार्थबोधकमिति। तत्त्वं च "अपर्यायशब्दानां पदवृत्तिस्मारिताऽतिरिक्तसंसर्गाऽगोचरप्रमाजनकत्वम्। अत्र संसर्गाऽगोचरप्रमितिजनकत्वमात्रोपादाने "घटःकलशः" इति वाक्येऽतिव्याप्तिः, अतोऽपर्यायशब्दानामिति। भिन्नरूपेण स्वार्थोपस्थापकानामित्यर्थः। अत्र च घटत्वेन "एकरूपेण" घटोपस्थापकत्वान्नातिव्याप्तिः। इन्द्रियाणामपि संसर्गाऽ

धिकरण्यम्, पदार्थयोर्विशेषणविशेष्यभावः, प्रत्यगात्मलक्षणयोर्लक्ष्यलक्षणभावश्चेति।

तदुक्तम्—'सामानाधिकरण्यञ्च विशेषणविशेष्यता।
लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनाम्।" इति॥

सम्बन्धत्रय है दो पदों के समानाधिकरण्य का, दो पदार्थों के विशेषणविशेष्यभाव का, तथा प्रत्यक् आत्मा अर्थात् जीव चैतन्य एवं शुद्ध चैतन्य के बोधक त्वम् तथा तत् पद का अखण्ड चैतन्य के साथ लक्ष्य लक्षणभाव सम्बन्ध है।

---

गोचरनिर्विकल्पक "प्रमिति" जनकत्वादतिव्याप्तिवारणाय शब्दानामिति। बहुवचननिर्देशस्तु सम्भूयैकार्थप्रतिपादकत्वलाभाय। तेन "धवखदिरपलाशाः" इत्यादिवाक्ये नातिव्याप्तिः। न चाऽपर्यायशब्दानां संसर्गाऽगोचरप्रमितिजनकत्वमित्येवोच्यतामिति वाच्यम्। अप्राप्तयोः प्राप्तिः संयोगः इत्यादिलक्षणवाक्येऽव्याप्तेः, लक्षणवाक्यस्य संयोगात्मकसंसर्गगोचरप्रमितिजनकत्वात्। अत्रेदं बोध्यम्। लक्षणवाक्यानामखण्डार्थबोधकत्वम्, का पृथिवीति जिज्ञासायां गन्धवती पृथिवीत्युच्यमाने स्वरूपतः पृथिव्या एव बोधः न तु गन्धस्य, प्रश्नोत्तरयोर्वैलक्ष्यापत्तेरिति। पदवृत्तिस्मारितातिरिक्तत्वस्य संसर्गविशेषणत्वे च उक्तलक्षणवाक्ये संयोगस्य पदवृत्तिस्मारितत्वाद्वारणम्। एवं द्विषदन्नभोजननिषेधके "विषंभुङ्क्ष्व" तिवाक्ये द्विषदन्नकर्मकभोजननिष्ठाऽनिष्टसाधनत्वप्रतिपादकेऽतिव्याप्तिवारणाय वृत्तीति। तथा च तादृशानिष्टसाधनत्वस्य पदज्ञाप्यत्वेपि पदवृत्त्यस्मारितत्वान्नातिव्याप्तिरिति संक्षेपः।

ननु जीवेश्वरयोः किंचिज्ज्ञत्वसर्वज्ञत्वादिविशिष्टयोरत्यन्तविलक्षणयोः परस्परविरुद्धार्थप्रतिपादिकानि तत्वमस्यादिमहावाक्यानि कथमखण्डैकरसं ब्रह्म प्रतिपादयन्तीत्याशंक्य साक्षादैक्यप्रतिपादकत्वाभावेऽपि लक्षणया सबन्धत्रयेणाऽखण्डैकार्थं प्रतिपादयन्तीत्याह। सम्बन्धत्रयेणेति। संबन्धत्रयस्वरूपमाह। संबन्धत्रयं नामेति। प्रत्यगात्मलक्षणयोरिति। अत्र लक्ष्यतेऽर्थोऽनेनेतिव्युत्पत्त्या लक्षणशब्देन लक्षकमुच्यते। तथा च प्रत्यगात्मपदयोरित्यर्थः। पदार्थप्रत्यगात्मनामिति। पदं चाऽर्थश्च प्रत्यगात्मा चेति पदार्थप्रत्यगात्मानस्तेषामित्यर्थः। तथा च सामानाधिकरण्य—विशेषणविशेष्यभाव—लक्ष्यलक्षणभावैः सहितं महा-

सामानाधिकरण्यसम्बन्धस्तावद्यथा सोऽयंदेवदत्त इत्यस्मिन् वाक्ये तत्कालविशिष्टदेवदत्तवाचकसशब्दस्यैतत्कालविशिष्ट देवदत्तवाचक अयंशब्दस्य चैकस्मिन् पिण्डे तात्पर्यसम्बन्धः, तथात्रापि "तत्त्वमसीति" वाक्ये परोक्षत्वादिविशिष्टचैतन्यवाचक तत्पदस्य अपरोक्षत्वादिविशिष्टचैतन्यवाचकत्वम्पदस्य चैकस्मिन् चैतन्ये तात्पर्यसम्बन्धः ।

वही कहा है—"समानाधिकरण्यश्च" इत्यादि ग्रन्थ से । सामानाधिकरण्यसम्बन्ध को बतलाते हैं—जैसे "सोऽयं देवदत्तः" इस वाक्य में पूर्वकाल में देखे हुवे देवदत्त का वाचक जो "स" शब्द-उसका, तथा इदानी अर्थात् वर्त्तमान काल में देखे हुवे देवदत्त का वाचक जो "अयं" शब्द—उसका इन दोनों पदों का एक देवदत्तरूप पिण्ड के अर्थ को प्रकट करने में तात्पर्य है अतः इन दोनों पदों का देवदत्तरूप पिण्ड को लेकर समानाधिकरण्य सम्बन्ध होता है। उसी प्रकार यहाँ "तत्त्वमसि" इस वाक्य में भी परोक्षत्वविशिष्ट ( अज्ञत्वत्त ) चैतन्य का वाचक जो "तत्" शब्द उसका, तथा अपरोक्ष चैतन्य का वाचक जो 'त्वम्' शब्द है उसका इन दोनों शब्दों का एक चैतन्यरूप अर्थ के बोध होने में तात्पर्य अतः इन दोनों पदों का चैतन्यरुप अर्थ में समानाधिकरण्य है [ इस प्रकार सामानाधिकरण्यरुप सम्बन्ध के द्वारा तत् और त्वम् ये दोनों अखण्ड अर्थ ( चिदात्म ब्रह्म ) का बोधन करते हैं ।

---

वाक्यमखण्डार्थबोधकमिति भावः । समानाधिकरण्यसंबन्ध इति । सामानाधिकरण्यात्मकसंबन्ध इत्यर्थः । तात्पर्यसंबन्धः समानविभक्तिकानां भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थेवृत्तिः सामानाधिकरण्यमिति सामानाधिकरण्यलक्षणमभिप्रेत्य तस्योदाहरणं दर्शयति। यथेति । स शब्दस्येति । तथा च स इति तत्पदस्य तत्कालतद्देशवैशिष्ट्यं प्रवृत्तिनिमित्तमिति भावः । अयं शब्दस्येति । अयमितीदं शब्दस्य एतत्कालैतद्देशवैशिष्ट्यं प्रवृत्तिनिमित्तमिति भावः । एकस्मिन्पिण्डे । देवदत्ते । तथा च भिन्नप्रवृत्तिनिमित्तयोः सोऽयंशब्दयोः एकस्मिन्देवदत्ते तात्पर्यसंबन्धः सामानाधिकरण्यं फलितम् । दार्ष्टान्ते पदयोः सामानाधिकरण्यं दर्शयति । तथाऽत्रेति । परोक्षत्वादीति ।

विशेषणविशेष्यभावसम्बन्धस्तु यथा तत्रैव वाक्ये स शब्दार्थतत्कालविशिष्टदेवदत्तस्य, अयं शब्दार्थैतत्कालविशिष्ट देवदत्तस्य चान्योन्य भेदव्यावर्त्तकतया विशेषणविशेष्यभावः। तथा-

विशेषणविशेष्यभावसम्बन्ध बतलाते हैं। जैसे उसी (सोऽयं देवदत्तः) वाक्य में 'स' शब्द पूर्वकाल में दृष्ट जो देवदत्त व्यक्ति उसका, तथा 'अयं' शब्द वर्त्तमानकाल में दृष्ट जो देवदत्त व्यक्ति उसका बोधक है। सो "सोऽयं" यहाँ पर 'तत्' शब्दार्थ तत्कालविशिष्टदेवदत्त 'इदं' शब्दार्थ एतत्कालविशिष्टदेवदत्त से भिन्न नहीं है, अतः परस्परभेदव्यावर्त्तक होने के नाते 'तत्' पदार्थ 'इदं' पदार्थ इन दोनों पदार्थों का विशेषणविशेष्यभाव सम्बन्ध हो जाता है। (क्योंकि जो शब्द अपने विशेष्यीभूत अर्थ को अन्य से व्यावृत्त करता है, वह विशेषण होता है, और जो व्यावृत्त होता है वह विशेष्य होता है। अतः 'सोऽयं' यहाँ पर तत्पदार्थ विशेषण है, इदं पदार्थ विशेष्य है) उसी प्रकार 'तत्त्वमसि' यहाँ

---

आदिना सर्वज्ञत्वादि परिग्रहः। तत्पदस्येति। तथा च तत्पदस्य परोक्षत्वसर्वज्ञत्वादिवैशिष्ट्यं प्रवृत्तिनिमित्तम्। अपरोक्षत्वादीति। आदिनाऽल्पज्ञत्वपरिग्रहः। त्वं पदस्येति। तथा च त्वं पदस्याऽपरोक्षत्वाऽल्पज्ञत्ववैशिष्ट्यं प्रवृत्तिनिमित्तम्। तथा च भिन्नप्रवृत्तिनिमित्तकयोस्तत्त्वंपदयोरेकस्मिन् चैतन्ये तात्पर्यसंबन्धः सामानाधिकरण्यं फलितम्। पदार्थयोर्विशेष्यविशेषणभावसंबन्धं सदृष्टान्तमाह। विशेषणविशेष्यभावसंबन्धस्त्विति। विशेष्यविशेषणभावात्मकसम्बन्धस्त्वित्यर्थः। व्यावर्तकं विशेषणम्। व्यावर्त्यं विशेष्यम्। तयोर्भावोविशेषणविशेष्यभावः। तत्रैव वाक्ये। सोयं देवदत्त इति वाक्ये। तत्कालेति। तत्कालोऽतीतकालः। एतत्कालेति। वर्तमानकालेत्यर्थः। देवदत्तस्य चेति। इदं च विशेषणविशेष्यभाव इत्यनेनान्वेति। तथा च सोय पदार्थयोर्मध्ये तच्छब्दार्थे विशेषणता विशेष्यता च एवमयंशब्दार्थेपि, तथा च परस्परं विशेषणविशेष्यभावः, सोऽयमितिवद् अयं स इति प्रयोगस्य सर्वानुभवसिद्धत्वादिति भावः। परस्परं विशेष्यविशेषणभावे हेतुमाह। अन्योन्यभेदव्यावर्तकतयेति। स शब्दार्थतत्कालविशिष्टदेवदत्तस्य अयं शब्दार्थैतत्कालविशिष्टदेवदत्तप्रतियोगिकभेदव्यावर्तकतया—अयं शब्दार्थै-

अपि वाक्ये तत् पदार्थपरोक्षत्वादिविशिष्टचैतन्यस्य त्वं पदार्थाऽपरोक्षत्वादि विशिष्टचैतन्यस्याऽन्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावः । लक्ष्यलक्षणसम्बन्धस्तु यथा तत्रैव स शब्दाऽयंशब्दयोस्तदर्थयोर्वा विरुद्ध तत्कालैतत्कालविशिष्टत्व परित्यागेन

पर भी 'तत्' पदार्थ हुवा अप्रत्यक्ष चैतन्त, और 'त्वम्' पदार्थ हुवा प्रत्यक्ष चैतन्य, सो इन दोनों अर्थों में कोई भी भेद नहीं है, अतः परस्पर के भेद के व्यावर्त्तक होने के नाते इन दोनों 'तत्' 'त्वम्' पदार्थों का विशेषणविशेष्यभाव सम्बन्ध बन गया 'तत्' पदार्थ 'त्वं' पदार्थ में विशेषण हो गया और 'त्वं' पदार्थ विशेष्य हो गया । लक्ष्यलक्षण सम्बन्ध यह होता है जैसे 'सोऽयं देवदत्तः" इस वाक्य में 'तत्' शब्द का अर्थ है तत्काल विशिष्ट, तथा 'इदं' शब्द का अर्थ है एतत्कालविशिष्ट, और देवदत्त का देवदत्त अर्थ है ही सो यहाँ पर विरुद्धार्थ

---

तत्कालविशिष्टदेवदत्तस्य सशब्दार्थतत्कालविशिष्टदेवदत्तप्रतियोगिकभेदव्यावर्तकतयेत्यर्थः । तथा च सोयमिति तच्छब्दवाच्यस्तत्कालतद्देशविशिष्टोदेवदत्तः सोयमितीदंशब्दवाच्यादेतत्कालैतद्देशविशिष्टाद्देवदत्तान्न भिद्यते इति यदा प्रतीयते, तदाऽयं शब्दवाच्यस्य तच्छब्दार्थनिष्ठभेदव्यावर्त्तकतया विशेषणत्वम्, तच्छब्दार्थस्य व्यावर्त्यत्वाद्विशेष्यत्वम् । एवं अयं स इतीदंशब्दवाच्यैतत्कालैतद्देशविशिष्टोदेवदत्तः अयं स इति तच्छब्दवाच्यतत्कालतद्देशविशिष्टाद्देवदत्ताद्भिन्नेति यदा प्रतीयते तदा तच्छब्दार्थस्य अयं शब्दवाच्यार्थनिष्ठभेदव्यावर्त्तकतया विशेषणत्वम्, तच्छब्दार्थस्य व्यावर्त्यत्वाद्विशेष्यत्वम् । उक्तविशेष्यविशेषणभावं दार्ष्टान्तिके योजयति । तथेति । अत्रापि वाक्ये । तत्त्वमसीति वाक्येपीत्यर्थः । अत्र भेदभ्रमनिवृत्तिर्विशेषणप्रयोजनम् इत्याशयेनाह । अन्योन्यभेदव्यावर्त्तकतयेति । त्वं पदार्थाऽपरोक्षत्वादिविशिष्टचैतन्यप्रतियोगिकभेदव्यावर्त्तकतया—तत्पदार्थपरोक्षत्वादिविशिष्टचैतन्यप्रतियोगिकभेदव्यावर्त्तकतया चेत्यर्थः ।

तथा च तत्पदवाच्यं सर्वज्ञत्वादिविशिष्टचैतन्यं त्वंपदवाच्यात् किंचिद्ज्ञत्वविशिष्टचैतन्यान्न भिद्यते इति यदा प्रतीयते तदा त्वं पदार्थस्य तत्पदार्थनिष्ठभेदव्यावर्तकत्वेन विशेषणत्वम्, तत्पदार्थस्य व्यावर्त्यत्वाद्विशेष्यत्वम् । एवं त्वंपदवाच्यं तत्पदवाच्यान्न भिद्यते इति यदा प्रतीयते तदा

अविरुद्धदेवदत्तेन सह लक्ष्यलक्षणभावः। तथात्रापि वाक्ये तत्त्वम्पदयोस्तदर्थयोर्वा विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टत्व परित्यागेनाविरुद्धचैतन्येन सह लक्ष्यलक्षणभावः। इयमेव भागलक्षणा इत्युच्यते।

तत्काल विशिष्ट तथा एतत्कालविशिष्ट को परित्याग करके अविरुद्ध देवदत्त रूप अर्थ के साथ लक्ष्यलक्षणभाव सम्बन्ध हो जाता है। वैसे ही 'तत्त्वमसि' इस वाक्य में भी 'तत्' 'त्वं' पदों के, अथवा उनके अर्थों के विरुद्धांश सर्वज्ञत्व-अल्पज्ञत्व का या परोक्षत्व-अपरोक्षत्व विशिष्टत्व का परित्याग करके अविरुद्ध चैतन्य अर्थ के साथ लक्ष्यलक्षण सम्बन्ध बन जाता है अर्थात् तत्' 'त्वं'पद लक्षण हैं, चिदात्मरूप अखण्ड ब्रह्म लक्ष्य हैं। इसी लक्ष्यलक्षणभाव सम्बन्ध को भाग लक्षणा तथा जहदजहल्लक्षणा भी कहते हैं। ( अर्थात् जिसमें कुछ अंश छोड़ दिया जाय—तथा कुछ अंश न छोड़ा जाय। जैसे सर्वज्ञत्व-अल्पज्ञत्व का त्याग कर दिया जाता है—और चैतन्यांशमात्र का ग्रहण करके अखण्ड अर्थ स्वप्रकाश चिदात्मब्रह्म का बोध 'तत्' 'त्वं' पद से जहदजहल्लक्षणा के द्वारा बन जाता है ) तत्त्वमसि में विशेषणविशेष्यभाव सम्बन्ध को तथा विशिष्ट को लेकर वाक्यार्थ सङ्गति नहीं हो सकती—

---

तत्पदार्थस्य त्वंपदार्थनिष्ठभेदव्यावर्त्तकत्वेन विशेषणत्वम्, त्वं पदार्थस्य विशेष्यत्वम्। तथा च तत्त्वमसि त्वं तदसि इति तत्त्वं पदार्थयोः परस्परं भेदव्यावर्त्तकत्वेन परस्परं विशेषणविशेष्यभाव इति भावः। लक्ष्यलक्षणसम्बन्धं सोदाहरणमाह। लक्ष्यलक्षणसम्बन्धस्त्विवति। अविरुद्धोऽखण्डार्थोलक्ष्यः। लक्षणं नाम लक्षकं, पदम् पदार्थो वा। यथेति। तत्रैव। सोयं देवदत्त इति वाक्ये एव। सशब्दाऽयंशब्दयोरिति। अस्य लक्ष्यलक्षणभाव इत्यनेनाऽन्वयः। तदर्थयोर्वेति। अत्रापि वाक्ये इति। तत्त्वमसीति वाक्येपीत्यर्थः। परित्यागेनेति। शक्यैकदेशपरित्यागेनेत्यर्थः। तथा च शक्यैकदेशपरित्यागेनैकदेशवृत्तिर्जहदजहल्लक्षणा। इयमेव। जहदजहल्लक्षणैव। अयं भावः—तत् त्वं पदयोः सामानाधिकरण्यं तावच्छ्रूयते, तच्च सामानाधिकरण्यं तयोर्भिन्नार्थत्वे न संभवति, घटपटपदयोस्तददर्शनात्। नापि एकार्थाभिधायकत्वेन, तदभावात्, अतः परिशेषादेकार्थलक्षकत्वेनैव सामानाधिकरण्यं बोध्यम्।

अस्मिन् वाक्ये नीलमुत्पलमिति वाक्यवद् वाक्यार्थो न संगच्छते। तत्र नीलपदार्थनीलगुणस्य उत्पलपदार्थोत्पलद्रव्यस्य च शुक्लपटादिव्यावर्त्तकतया ऽन्योन्यविशेषणविशेष्यभावसंसर्गस्य अन्यतरविशिष्टस्यान्यतरस्य वा तदैक्यस्य वा वाक्यार्थत्वाङ्गीकारे प्रमाणान्तरविरोधाभावद्वाक्यार्थः संगच्छते। अत्र तु तत् पदार्थ

'तत्त्वमसि' इस वाक्य में 'नीलमुत्पलम्' इस वाक्य के समान वाक्यार्थ की संगति नहीं हो सकती है, क्योंकि 'नीलमुत्पलम्' यहाँ नीलपद का अर्थ है नीलरूपात्मक गुण, और उत्पलपद का अर्थ है उत्पलद्रव्य, सो नीलगुण शुक्ल का व्यावर्त्तक है, और उत्पलद्रव्य घट-पट आदि द्रव्यों का व्यावर्त्तक है, अतः नील और उत्पल का अन्योन्य ( परस्पर ) में विशेषणविशेष्यभाव सम्बन्ध संगत हो जाता है क्योंकि नील गुण है और उत्पलद्रव्य है, और गुणगुणी का विशेषणविशेष्यभाव सिद्ध ही है। अथवा अन्यतर ( दोनों में से एक ) अर्थात् नीलगुण से विशिष्ट जो उत्पलपदार्थ उसके ऐक्य को 'नीलमुत्पलम्' इस वाक्य का अर्थ स्वीकार कर लेने पर प्रमाणान्तर के साथ कोई विरोध नहीं है, अतः पूर्वोक्त दोनों वाक्यार्थ संगत हो जाते हैं। परन्तु "तत्त्वमसि" यहाँ पर 'तत्'

---

ननु नीलोत्पलमित्यत्रेव तत्त्वं पदयोः समानविभक्तिकतया संसर्गानवगाहिबोधजनकत्वरूपाऽखण्डार्थकत्वानुपपत्तिः, तद्वाच्ययोरभेदसम्बन्धेनाऽन्वयस्यावश्यकतया ऽभेदसम्बन्धस्यापि प्रतिपादनादित्यत आह। अस्मिन्वाक्ये इति। तत्त्वमसीति महावाक्ये इत्यर्थः। तत्र। नीलोत्पलमिति वाक्ये। नीलपदार्थनीलगुणस्येति। नीलगुणविशिष्टस्येत्यपि बोध्यम्। शौक्ल्यपटादिभेदव्यावर्त्तकतयेति। नीलगुणस्य शौक्ल्यादिव्यावर्त्तकतया, उत्पलस्य च पटादिव्यावर्त्तकतयेत्यर्थः। अन्योन्येति अधिकः पाठः, नीलपदस्य गुणवाचकतया तदर्थस्य विशेषणत्वेन परस्परविशेषणविशेष्यभावविरहादिति ध्येयम्। विशेषणविशेष्यभावसंसर्गस्येति। अस्य वाक्यार्थत्वाङ्गीकारे इत्यनेनान्वयः। अन्यतरविशिष्टस्याऽन्यतरस्येति। नीलगुणविशिष्टस्योत्पलपदार्थस्येत्यर्थः। तदैक्यस्य वेति। नीलगुणविशिष्टोत्पलयोरैक्यस्य वेत्यर्थः। ऐक्यम्

परोक्षत्वादिविशिष्टचैतन्यस्य त्वम्पदार्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावसंसर्गस्य अन्यतरविशिष्टस्यान्यतरस्य तदैक्यस्य वा वाक्यार्थत्वाङ्गीकारे प्रत्यक्षादिप्रमाणविरोधाद् वाक्यार्थो न संगच्छते। तदुक्तम्

पद का अर्थ है परोक्षत्व विशिष्ट चैतन्य, और 'त्वं' पद का अर्थ है अपरोक्षत्व विशिष्ट चैतन्य, दोनों चैतन्य होने के नाते द्रव्य हैं अतः विशेषण विशेष्यभाव सम्बन्ध को लेकर, अथवा अन्यतर (तत्पदार्थ) से विशिष्ट जो अन्यतर (त्वंपदार्थ) अर्थात् एक अर्थ से विशिष्ट जो अपर अर्थ उसको लेकर, अथवा तत्पदार्थ एवं त्वंपदार्थ के ऐक्य को लेकर वाक्यार्थत्व स्वीकार करने पर प्रत्यक्षादि प्रमाणों के विरोध हो जाता है। अर्थात् 'तत्त्वमसि' यहाँ पर तत्पदार्थ तथा त्वंपदार्थ इन दोनों का चैतन्य (द्रव्य) होने के नाते न विशेषण विशेष्यभाव हो सकता है, न एक से विशिष्ट अपर हो सकता है कारण कि प्रत्यक्ष प्रमाण से विरोध है क्योंकि सर्वज्ञत्वविशिष्ट चैतन्यरूप तत्पदार्थ से विशिष्ट अल्पज्ञत्वविशिष्टचैतन्यरूप त्वंपदार्थ कैसे हो सकता है। अतएव दोनों का ऐक्य भी सुतरां बाधित है। वही कहा है—संसर्गो वा विशिष्टो वा इत्यादि।

---

तादात्म्यम्। प्रमाणान्तरविरोधाभावादिति। शौक्ल्यादिव्यावर्त्तकनीलगुणस्य पटादिव्यावर्त्तकोत्पलद्रव्यस्य च गुणगुणिभावेन विरोधविरहादित्यर्थः। संगच्छते इति। तथा च नीलोत्पलमिति वाक्यस्य नाऽखण्डार्थकत्वमिति भावः। प्रकृतवाक्ये नीलमुत्पलमिति वाक्याद्वैपम्यमाह। अत्रत्विति। तत्त्वमसीति वाक्ये तु इत्यर्थः। विशेषणविशेष्यभावसंसर्गस्येति। परोक्षत्वसर्वज्ञत्वादिविशिष्टचैतन्य-किंचिद्ज्ञत्वाऽपरोक्षत्वविशिष्टचैतन्ययोः संसर्गस्येत्यर्थः। अस्य वाक्यार्थत्वाङ्गीकारे इत्यनेनान्वयः। अन्यतरविशिष्टस्या न्यतरस्येति। तादृशचैतन्यविशिष्टतादृशचैतन्यस्येत्यर्थः। तदैक्यस्येति। तादृशचैतन्ययोरैक्यस्येत्यर्थः। प्रत्यक्षादिप्रमाणविरोधादिति। अथ यदीश्वरः प्रत्यक्षः स्यात्तदा जीवेश्वरयोर्भेदोपि प्रत्यक्षः स्यात्, तदेव "प्रत्यक्षादिप्रमाण-

विरोधात्" "अभेदलक्षणो" वाक्यार्थोन संगच्छते" इति संगच्छेत। नचैतन्, ईश्वरस्याऽप्रत्यक्षत्वादिति चेन्न। जीवस्तावत्प्रत्यक्ष एव। ईश्वरस्याऽप्रत्यक्षत्वेपि ईश्वरभेदः प्रत्यक्षः, अन्योन्याभावप्रत्यक्षेऽधिकरणे योग्यताया अपेक्षितत्वात्। यद्यहमीश्वरः स्यां, तदा सर्वज्ञः स्यां, न स्यां किंचिद्ज्ञ इत्यनुपलब्धिसहकृतप्रत्यक्षप्रमाणसत्वाज्जीवेश्वरयोर्भेदस्य प्रत्यक्षसिद्धत्वात्। तथा च तत्त्वंपदवाच्ययोः परोक्षत्वापरोक्षत्वयोः सर्वज्ञत्वाल्पज्ञत्वयोर्वा एकस्मिन्धर्मिणि विरोधादभेदसंबन्धेनाऽन्वयाऽसम्भवादखण्डार्थकत्वमिति भावः। अत्र वाक्यवृत्तिकारसम्मतिमाह। **संसर्गोवेति। अखण्डैकरसत्वेनेति।** वस्तुमात्रस्वरूपेणेत्यर्थः।

ननु शक्यसंबन्धो लक्षणा, साऽत्राऽनुपपन्ना, ब्रह्मणोऽसंगतत्वादिति चेत्—सत्यम्। कल्पितसंबन्धस्वीकारात्। तथा हि—तत्पदवाच्यस्य त्वं पदवाच्यस्य च विशेषणीभूतजड़भागस्याधिष्ठानतासंबन्धः। विशेष्यीभूत चैतन्यस्य च तादात्म्यसंबन्धः। तथा च नोक्तानुपपत्तिः।

न च विरुद्धयोः परोक्षत्वाऽपरोक्षत्वयोः सर्वज्ञत्वाऽल्पज्ञत्वयो र्वा परित्यागेन चैतन्यमात्रयोरपि अभेदसंबन्धेनाऽन्वयबोधः संभवत्येव समानविभक्तिकत्वस्याऽभेदान्वयबोधप्रयोजकत्वात्, तथा च नाऽखण्डार्थकत्वमिति वाच्यम्। चैतन्यमात्रस्य चैतन्यमात्राऽभेदप्रयोजकत्वे "घटोघट इति वाक्यवदप्रामाण्यापत्तेः। तस्मान्मीमांसकमतरीत्या तत्त्वमसीति वाक्यादेव चैतन्यमात्रं प्रतीयते, अभेदबोधस्तदस्तूत्कालिक इति सिद्धान्तः।

अथ वा मायावच्छिन्नचैतन्यं तत्पदवाच्यम्, अन्तःकरणावच्छिन्नचैतन्यं त्वं पदवाच्यम्। मायोपहितचैतन्यं तत्पदलक्ष्यम्, अन्तःकरणोपहितचैतन्यं त्वं पदलक्ष्यम्। न तु शुद्धचैतन्यं येन पौनरुक्त्यं स्यात्। उपाधिभेदेन लक्ष्ययोर्भेदात्। उपहितयोरभेदाबाऽभेदबोधबोधकत्वं महावाक्यस्य। तत्पदार्थे परोक्षताभ्रमनिवृत्तये तत्पदार्थमुद्दिश्य त्वं पदार्थोविधीयते। त्वं पदार्थे परिच्छिन्नत्वभ्रमनिवृत्तये त्वं पदार्थमुद्दिश्य तत्पदार्थोविधीयते इत्यन्यत्र विस्तरः।

तत्वमस्यादिवाक्यानामखण्डार्थबोधकत्वं जहदजहल्लक्षणया, न तु जहल्लक्षणया, "अशेष" वाच्यार्थस्याऽपरित्यागादित्याह। **अत्रेति।** तत्त्वमस्यादिवाक्ये इत्यर्थः। जहत्स्वार्थलक्षणा न संगच्छते इत्यनेनान्वयः।

संसर्गो वा विशिष्टो वा वाक्यार्थोनाऽत्र संमतः ।
अखण्डैकरसत्वेन वाक्यार्थोविदुषांमत इति ॥

अत्र गंगायां घोषः प्रतिवसतीति वाक्यवज्जहल्लक्षणापि न संगच्छते । तत्र तु गंगाघोषयोराधाराधेयभावलक्षणस्य वाक्यार्थस्याशेषतो विरुद्धत्वाद् वाक्यार्थमशेषतः परित्यज्य तत् सम्बन्धितीरलक्षणाया युक्तत्वात् जहल्लक्षणा संगच्छते, अत्र तु परोक्षापरोक्षचैतन्यैकत्वलक्षणस्य वाक्यार्थस्य भागमात्रे विरोधाद् भागान्तरमपि परित्यज्यान्यलक्षणाया अयुक्तत्वाज्जहल्लक्षणा न

'तत्त्वमसि' इस वाक्य में 'गङ्गायां घोषः प्रतिवसति' इस वाक्य की तरह जहल्लक्षणा भी नहीं हो सकती है। क्योंकि गङ्गा में घोष रहता है इस वाक्य से आधार गङ्गा और आधेय घोष सिद्ध हो रहा है परन्तु गङ्गा और घोष का आधार-आधेयभावरूपवाक्यार्थ अशेषतः ( सर्वांश ) में विरुद्ध है कारण कि गङ्गा में घोष ( झोंपड़ी ) सर्वथा बाधित है, इसलिये गङ्गायां घोषः इस वाक्य में गङ्गापद के वास्तविक अर्थ ( वाच्यार्थ ) का अशेषतः परित्याग करके सामीप्य सम्बन्ध वाले तीर में गङ्गापद की लक्षणा युक्त ( उचित ) होने के नाते जह-ल्लक्षणा सङ्गत हो जाती है। परन्तु यहाँ तत्त्वमसि में परोक्षत्वविशिष्ट चैतन्य अपरोक्षत्वविशिष्टचैतन्य इन दोनों के ऐक्यरूप वाक्यार्थ का भागमात्र ( परोक्षत्व तथा अपरोक्षत्व ) में विरोध है, न कि चैतन्यरूप अर्थ में। अतः अविरुद्ध चैतन्य का परित्याग करके अन्य ( चैतन्य से अतिरिक्त ) में लक्षणा मानना सर्वथा अनुचित होने के नाते जहल्लक्षणा नहीं हो सकती है। प्रश्न—जिस

---

तदेव दर्शयितुं जहत्स्वार्थलक्षणायास्तावदुदाहरणमाह । **गंगायामिति** । शक्यार्थपरित्यागेन तत्संबन्ध्यर्थान्तरे वृत्तिर्जहल्लक्षणा । गंगापदवाच्यार्थ-प्रवाहस्य घोषपदार्थेऽन्वयाऽनुपपत्त्या वाच्यार्थस्य परित्यागादित्याह । **तत्र तु इति** । गंगायां घोष इत्यादावित्यर्थः । **गंगाघोषयोरिति** । प्रवाहघोषयोरित्यर्थः । आभीरनिवासो घोषः । **वाक्यार्थमिति** । वाच्यार्थमित्यर्थः । **तत्सम्बन्धीति** । वाच्यार्थसंबन्धीत्यर्थः, प्रवाह-संबन्धीति यावत् । तत्त्वमसीति वाक्ये वाच्यार्थस्याऽपरित्यागाज्जह-

संगच्छते। न च गंगापदं स्वार्थपरित्यागेन तीरपदार्थं यथा लक्षयति तथा तत्पदं त्वंपदं वा स्वार्थपरित्यागेन त्वम्पदार्थं तत्पदार्थं वा लक्षयतु अतः कुतोजहल्लक्षणा न संगच्छत इति वाच्यम्। तत्र तीरपदाश्रवणेन तदर्थाप्रतीतौ लक्षणया तत्प्रतीत्यपेक्षायामपि

प्रकार गङ्गापद अपने वास्तविक प्रवाहरूप अर्थ छोड़कर लक्षणा के द्वारा तीररूप अर्थ का बोधन करता है अर्थात् गङ्गापद की तीर में जैसे लक्षणा की जाती है, इसी प्रकार तत्पद लक्षणा द्वारा अपने परोक्षत्वादिविशिष्टचैतन्यरूप का त्याग करके त्वंपदार्थ ( जीव चैतन्य ) का बोधन करे। और त्वंपद अपने अपरोक्षत्व विशिष्ट चैतन्यरूप अर्थ को छोड़कर तत्पदार्थ जो ईश्वर चैतन्य उसका लक्षणा द्वारा बोधन करे, अतः जहल्लक्षणा कैसे 'तत्त्वमसि' इस वाक्य में नहीं हो सकती है। उत्तर—'गङ्गायां घोषः' यहाँ पर तीरपद का श्रवण न होने के कारण तीररूप अर्थ की प्रतीति ही नहीं हो सकेगी अतः वहाँ पर तीररूप अर्थ

---

ल्लक्षणा न संभवतीत्याह। अत्र तु इति। तत्त्वमसीति वाक्ये तु इत्यर्थः। भागमात्रे इति। परोक्षत्वापरोक्षत्वमात्रे-सर्वज्ञत्वाऽसर्वज्ञत्व योर्वेत्यर्थः। मात्रपदेन चैतन्यव्यावृत्तिः। भागान्तरमपीति। चैतन्यमपीत्यर्थः। अन्यलक्षणाया इति। अन्यस्मिन् "चैतन्यातिरिक्ते" पदार्थे लक्षणाया इत्यर्थः। तथा च विरुद्धयोः परोक्षत्वापरोक्षत्वयोरेकत्वाऽसंभवेन तत्परित्यागेपि चैतन्यभागस्यैकत्वे विरोधाभावात्तत्त्यागो न युज्यते इति भावः। ननु विशेषणाभावे विशेषणाभावप्रयुक्तविशिष्टाभावन्यायेन विशेषणांशपरित्यागेपि विशिष्टस्वार्थपरित्यागाज्जहल्लक्षणैव तत्त्वं पदयोरपि गंगापदवत्स्यादित्याशंकते। न चेति। स्वार्थपरित्यागेनेति। प्रवाहलक्षणस्वार्थपरित्यागेनेत्यर्थः। तथेति। तत्पदं स्वार्थपरित्यागेन त्वं पदार्थं लक्षयतु एवं त्वं पदं स्वार्थपरित्यागेन तत्पदार्थं लक्षयतु इत्यन्वयः। अतः। वाच्यार्थस्य परित्यात्। कुतः। कथम्। तथा च जहल्लक्षणैव युक्तेति भावः। निराकरोति। तत्रेति। गङ्गायां घोष इत्यत्रेत्यर्थः। तदर्थाऽप्रतीताविति। विना लक्षणामित्यादिः। विना लक्षणां तीरपदार्थाऽप्रतीतावित्यर्थः। श्रुतपदस्य मुख्यार्थ

तत्त्वम्पदयोः श्रूयमाणत्वेन तदर्थ प्रतीतौ लक्षणया पुनरन्यतर-पदार्थप्रतीत्यपेक्षाभावात् ।

अत्र 'शोणो धावति' इति वाक्यवद् जहल्लक्षणापि न संभ्भवति । तत्र शोणगुणगमनलक्षणस्य वाक्यार्थस्य विरुद्धत्वात्त-

की प्रतीति के लिये लक्षणा की अपेक्षा है। परन्तु यहाँ पर ( तत्त्वमसि इस वाक्य में ) तत् और त्वं ये दोनों पद श्रूयमाण हैं और उनसे अपने-अपने अर्थ की प्रतीति भी हो रही है, इसलिये अन्यतर ( दोनों में से एक ) पद से अर्थात् तत् और त्वं इन दोनों में से तत्पद से त्वंपदार्थ की और त्वंपद से तत्पदार्थ की प्रतीति की कोई आवश्यकता नहीं है, शक्ति से ही निर्वाह हो जावेगा।

"शोणो धावति" इस वाक्य में जैसे अजहल्लक्षणा होती है, उस प्रकार "तत्त्व-मसि" इस वाक्य में अजहल्लक्षणा भी नहीं हो सकती है, कारण कि 'शोणोधा-वति" का अर्थ है शोण ( लालरंग ) धावति ( दौड़ता है ) सो "शोण" गुण है अतः उसका धावन-गमन ( दौड़ना ) कभी नहीं हो सकता है, क्यों कि शोणगुण कर्तृक गमनरूप वाक्यार्थ विरुद्ध है। इसलिये यहाँ शोणगुण का परित्याग न करते

---

मुख्यार्थसम्बन्धिनि अश्रुतपदार्थे लक्षणेति भावः। तत्प्रतीत्यपेक्षाया-मपीति । तीरपदार्थप्रतीत्यपेक्षायामपीत्यर्थः । तीरप्रतीत्यर्थं लक्षणाया अपेक्षितत्वेपीति यावत् । तदर्थप्रतीताविति । विना लक्षणामित्यादिः । विना लक्षणां तत्त्वं पदार्थप्रतीतावित्यर्थः । शक्त्यैव तत्प्रतीताविति यावत् । अन्यतरपदेनेति । तथा च तत्पदेन त्वं पदार्थप्रतीत्यपेक्षा-भावात्, त्वं पदेन तत्पदार्थप्रतीत्यपेक्षाभावाच्च । शक्त्यैव पदार्थप्रतीतौ-लक्षणाया अन्यथासिद्धत्वादिति ध्येयम् ।

अजहत्स्वार्थलक्षणां व्युदस्यति । अत्रेति । तत्त्वमस्यादिवाक्ये इत्यर्थः । अजहल्लक्षणापि न सम्भवतीत्यन्वयः । शक्यार्थाऽपरित्यागेन तत्सम्बन्ध्यर्थान्तरे वृत्तिरजहल्लक्षणा । यथा शोणोधावतीत्यत्र शोण-पदस्य स्ववाच्यशोणगुणाऽपरित्यागेन तदाश्रयाऽश्वादौ सा, तद्वदत्र न सम्भवतीत्यर्थः । कुत इत्यत आह । तत्रेति । शोणोधावतीत्यत्रेत्यर्थः । शोणगुणगमनलक्षणस्येति । शोणगुणकर्तृकगमनरूपस्येत्यर्थः ।

दपरित्यागेन तदाश्रयाश्वादिलक्षणया तद्विरोधपरिहारसंभवाद-जहल्लक्षणा संभवति । अत्रतुपरोक्षत्वादिविशिष्टचैतन्यैकत्वस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तत्सम्बन्धिनो यस्य कस्य चिदर्थस्य लक्षितत्वेऽपि तद्विरोधपरिहारासंभवात् अजहल्लक्षणा न संभवत्येव । न च तत्पदं त्वंपदं वा स्वार्थं विरुद्धांशपरित्यागे-

हुये शोणगुण वाले ( शोणगुणाश्रय ) अश्व आदि में शोणपद की लक्षणा करके विरोध का परिहार हो जावेगा अतः यहाँ शोण पद की अजहल्लक्षणा संभव है। परन्तु "तत्त्वमसि" इस वाक्य में परोक्षत्वविशिष्टचैतन्य तथा अपरोक्षत्वविशिष्ट चैतन्य का ऐक्यरूप जो वाक्यार्थ है, उसके परोक्षत्व-अपरोक्षत्व इन दोनों अर्थों के परस्पर विरुद्ध होने के नाते जब तक उनका परित्याग नहीं किया जायेगा तब तक तत्सम्बधी जिस किसी अर्थ के लक्षित होने पर भी परोक्षत्व-अपरोक्षत्व रूप विरुद्ध अर्थ को लेकर होने वाले विरोध का परिहार असंभव होने के नाते अजहल्लक्षणा नहीं हो सकती है।

प्रश्न—"तत्त्वमसि" यहाँ पर तत्पद स्वार्थ जो परोक्षत्वरूप विरुद्धांश उसका परित्याग करता हुआ, एवं उभयसाधारण चैतन्य अंश का परित्याग न करता

---

विरुद्धत्वादिति । शोणगुणकर्तृकगमनाऽसम्भवादिति भावः । तदपरित्यागेन । शोणगुणाऽपरित्यागेन । तदाश्रयेति । शोणगुणाश्रयेत्यर्थः । तद्विरोधपरिहारसम्भवादिति । वाक्यार्थविरोधपरिहारसम्भवादित्यर्थः । शोणगुणविशिष्टाऽश्वकर्तृकगमनसम्भवादिति भावः । अजहल्लक्षणा सम्भवतीति । शोणोधावतीति वाक्ये शोणगुणस्य गमनाऽसम्भवेन मुख्यार्थविरोधे सति शोणपदस्य स्वार्थाऽपरित्यागेनाजहत्स्वार्थलक्षणा युक्तैवेति भावः । अत्र तु इति । तत्त्वमस्यादिवाक्ये इत्यर्थः । परोक्षत्वाऽपरोक्षत्वादिविशिष्टचैतन्यैकत्वस्येति । परोक्षत्वविशिष्टचैतन्याऽपरोक्षत्वविशिष्टचैतन्यतादात्म्यस्येत्यर्थः । तदपरित्यागेनेति । स्ववाच्य"तादृशविशिष्टचैतन्या"ऽपरित्यागेनेत्यर्थः । तत्सम्ब-

नांशान्तरसहितं त्वंपदार्थं तत्पदार्थं वा लक्षयतु, अतः कथं प्रकारान्तरेण भागलक्षणाङ्गीकरणमिति वाच्यम् एकेन पदेन स्वार्थांश पदार्थान्तरोभयलक्षणाया असंभवात्। पदान्तरेण तदर्थप्रतीतौ लक्षणया पुनस्तत्प्रतीत्यपेक्षाभावाच्च।

अर्थात् चैतन्यरूप अंशान्तर के सहित त्वंपद के अपरोक्षत्वविशिष्टचैतन्यरूप अर्थ को लक्षणा के द्वारा बोधित करता है, एवं त्वंपद स्वार्थ जो अपरोक्षत्वरूप विरुद्ध अंश उसका परित्याग करता हुआ, और शुद्धचैतन्यरूप अंशान्तर के सहित तत्पद के परोक्षत्वविशिष्ट चैतन्यरूप अर्थ को लक्षणा द्वारा बोधित करता है अतः बतलाइये कैसे यहाँ प्रकारान्तर से भागलक्षणा ( जहदजहल्लक्षणा ) हो सकती।

उत्तर—एक पद से अर्थात् तत्पद या त्वंपद से परित्याग किये हुये जो परोक्षत्व-अपरोक्षत्वरूप स्वार्थांश है उसको, तथा पदार्थान्तर को ( अर्थात् तत्पद

---

न्धिनः। स्ववाच्यसम्बन्धिनः। यस्य कस्य चिदिति। अनिर्दिष्टविशेषस्येत्यर्थः। अर्थस्य। अर्थान्तरस्य। तद्विरोधपरिहाराऽसम्भवदिति। वाच्यार्थयोर्विरोधस्याऽपरिहारादित्यर्थः। तत्पदस्य त्वंपदस्य वा स्ववाच्यार्थाऽपरित्यागेन तत्सम्बन्धिनि यस्मिन् कस्मिंश्चिदनिर्दिष्टविशेषेऽर्थान्तरे लक्षणाङ्गीकारेपि वाच्यार्थयोर्विरोधस्याऽपरिहाराद् "तद्विरोधेन तद्विशिष्टयोरपि विरोधात्" अजहल्लक्षणापि नात्र युज्यते इति भावः।

उक्तार्थं विस्मृत्य शंकते। न चेति। तत्पदं स्वार्थविरुद्धांशपरित्यागेन त्वं पदार्थं लक्षयतु त्वं पदं वा स्वार्थविरुद्धांशपरित्यागेन तत्पदार्थं लक्षयतु इति योजना। स्ववाच्योयोर्विरुद्धांशस्तत्परित्यागेनेत्यर्थः। अंशान्तरं च शुद्धचैतन्यम्। प्रकारान्तरेणेति। पदद्वयस्य शुद्धचैतन्ये लक्षणैव कुतः, एकस्य पदस्य पदार्थान्तरे लक्षणैव किं न स्यादित्यर्थः। तथा च तत्पदं स्वार्थं विरुद्धपरोक्षत्वादिधर्मं परित्यज्याऽविरुद्धचैतन्यांशाऽपरित्यागेन त्वं पदार्थं किंचिद्ज्ञत्वादिविशिष्टचैतन्यं लक्षयतु त्वं पदं वा स्वार्थं विरुद्धाऽपरोक्षत्वादिधर्मं परित्यज्याऽविरुद्धचैतन्यांशाऽपरित्यागेन तत्पदार्थं सर्वज्ञत्वादिविशिष्टमीश्वरचैतन्यं लक्षयतु इत्यजहत्स्वार्थलक्षणयैव निर्वाहे किं भागलक्षणाङ्गीकारेणेति शंकाकृदाशयः। निराकरोति। एकेन पदेनेति। तत्पदेन त्वंपदेन चेत्यर्थः। स्वार्थांशेति।

तस्माद्यथा सोऽयं देवदत्त इति वाक्यं तदर्थो वा तत्कालैतत्कालविशिष्टदेवदत्तलक्षणस्य वाक्यार्थस्यांशे विरोधाद्विरुद्धतत्कालैतत्कालविशिष्टांशं परित्यज्याऽविरुद्धदेवदत्तांशमात्रं लक्षयति,

से त्वंपदार्थ को और त्वंपद से तत्पदार्थ को ) लक्षणा द्वारा बोधित करने के लिये उभय में लक्षणा का स्वीकार सर्वथा अनुचित है और दूसरी बात यह है 'तत्त्वमसि' इस वाक्य में तत् और त्वं ये दोनों पद जब कि मौजूद हैं तो उन्हीं से अपने अपने अर्थ का अर्थों की प्रतीति हो जायेगी दूसरे पद से दूसरे पद के अर्थ प्रतीति के लिये लक्षणा की कोई अपेक्षा नहीं है। अतः जैसे "सोऽयंदेवदत्तः" यह वाक्य अथवा वाक्यार्थ तत्कालविशिष्ट-एवं एतत्काल विशिष्ट देवदत्तरूप वाक्यार्थ का अंश में अर्थात् तत्काल-एतत्काल रूप अंश में विरोध होने के नाते विरुद्ध तत्कालविशिष्टएतत्कालविशिष्ट अंश को छोड़कर अविरुद्ध देवदत्त अंश मात्र के बोध के लिये जहदजहल्लक्षणा मानी जाती है। उसी प्रकार "तत्त्वमसि" यह वाक्य अथवा वाक्यार्थ परोक्षत्वविशिष्ट चैतन्य ऐक्य रूप जो तत्पदार्थ है, और अपरो-

---

शुद्धचैतन्येत्यर्थः। **पदार्थान्तरेति।** तत्पदार्थत्वंपदार्थान्यतरेत्यर्थः। तथा च एकेन तत्पदेन त्वंपदेन वा स्वार्थांशाऽपरित्यागेन स्वार्थांशपदार्थान्तरोभयलक्षणाया असम्भवान्। सकृदुच्चरित इति न्यायादिति भावः। अत्रापि पूर्वोक्तं दूषणमुपपादयति। **पदान्तरेणेति।** तत्पदेन त्वंपदेन वेत्यर्थः। **तदर्थप्रतीताविति।** विना लक्षणामित्यादिः। विना लक्षणां तत्त्वं पदार्थप्रतीतावित्यर्थः। शक्त्यैव प्रतीताविति यावत्। **लक्षणयेति।** अन्य तत्पदेनेत्यादिः। **तत्प्रतीत्यपेक्षाभावाच्चेति।** तत्पदेन त्वंपदार्थप्रतीत्यपेक्षाऽभावान्, त्वंपदेन तत्पदार्थप्रतीत्यपेक्षाऽभावदित्यर्थः। शक्त्यैव पदार्थप्रतीतौ लक्षणाया अन्याय्यत्वादिति ध्येयम्। अतः परिशेषाद् भागलक्षणाऽङ्गीकर्तव्येति उपसंहरति। **तस्मादिति।** यस्मात्तत्त्वमस्यादिवाक्ये जहत्स्वार्थलक्षणाऽजहत्स्वार्थलक्षणयोरसम्भवस्तस्मात्तत्त्वमस्यादिवाक्यं जहदजहत्स्वार्थलक्षणया विरुद्धांशं परित्यज्याऽविरुद्धाऽखण्डचैतन्यमात्रं लक्षयतीति योजना। तत्र दृष्टान्तमाह। **यथेति।** सोयमिति पदद्वयं वाक्यशब्दार्थः। एवं दार्ष्टान्तेपि तत्त्वमिति पदद्वयं बोध्यम्। यद्यपि पदधर्मोलक्षणा, तथापि पदार्थस्यापि लत्रकत्वमभिप्रेत्य पदार्थो वेत्युक्तम्। **अंशे।** **अंशतः।** आत्मत्वोपदेशवाक्यार्थं सप्रपञ्चं निरूप्य

तथा तत्त्वमसीति वाक्यं तदर्थो वा परोक्षत्वाऽपरोक्षत्वादि विशिष्ट चैतन्यैकत्वलक्षणस्य वाक्यार्थस्यांशे विरोधाद्विरुद्धपरोक्ष त्वापरोक्षत्वविशिष्टांशं परित्यज्याविरुद्धमखण्डचैतन्यमात्रं लक्षयति।

अधुना अहंब्रह्मास्मि इत्यनुभववाक्यार्थो वर्ण्यते। एवमाचार्येणाध्यारोपापवादपुरः सरं तत्त्वंपदार्थौ शोधयित्वा वाक्येनाखण्डार्थेऽवबोधिते, अधिकारिणः "अहं नित्यशुद्धबुद्धमुक्तसत्य स्वभावं परमानन्दानन्ताद्वयंब्रह्मास्मि" इत्यखण्डाकाराकारिता चित्त वृत्तिरुदेति। सातु चित्प्रतिबिम्बसहिता सती प्रत्यगभिन्नं परं

क्षत्वविशिष्ट चैतन्य के ऐक्य रूप जो त्वंपदार्थ है उनमें परस्पर परोक्षत्व तथा अपरोक्षत्व रूप अंश में विरोध होने के नाते विरुद्ध जो परोक्षत्वविशिष्ट तथा अपरोक्षत्व विशिष्ट अंश है उसे छोड़कर अविरुद्ध अखण्ड चैतन्यमात्र रूप अर्थ को जहदजहल्ल लक्षणा द्वारा बोधित करते हैं।

[ अखण्ड चैतन्य के प्रतिपादक 'तत्त्वमसि' इस महावाक्य का निरूपण करके ] अब हम 'अहं ब्रह्मास्मि' इस अनुभव के विषय वाक्य के अर्थ का वर्णन करते हैं। आचार्य ने अध्यारोप तथा अपवाद न्याय से 'तत्' और 'त्वं' इन दोनो पदों के अर्थ का संशोधन करके जब 'तत्त्वमसि' इस वाक्य के द्वारा विशुद्ध ब्रह्मस्वरूप अखण्ड अर्थ के अवबोधित हो जाने पर अधिकारी को "मैं नित्य-शुद्ध-बुद्ध-मुक्त-सत्यस्वरूप-परमानन्द-अविनाशी अद्वितीय ब्रह्म हूँ" इस प्रकार की अखण्ड ब्रह्मरूप आकारवाली अन्तःकरण की वृत्ति का उदय होता है। और यह अन्तःकरण की वृत्ति जब चैतन्य से प्रतिबिम्बित होती है तब वह अन्तःकरण की वृत्ति चैतन्य के द्वारा प्रकाशमान होकर प्रत्यगात्मा से अभिन्न परब्रह्म को विषय करके परब्रह्म विषयक अज्ञान को बाध देती है। उस समय पर ( वस्त्र ) के कारण तन्तु के नष्ट हो जाने पर जैसे पट का भी दाह ( नाश ) हो जाता है, उसी प्रकार अखिल ( समस्त ) प्रपंच के कारण अज्ञान के बाधित हो जाने पर उस अज्ञान का संपूर्ण प्रपचात्मक कार्य भी बाधित हो जाता है इसीलिये सकल प्रपञ्चान्तर्गत अखण्डाकाराकारित चित्तवृत्ति भी बाधित हो जाती है और उस वृत्ति में प्रतिबिम्बित चैतन्य भी जैसे दीपप्रभा आदित्य ( सूर्य ) की प्रभा को

---

यजुर्वेदानुभववाक्यार्थोवर्ण्यते। अधुनेति। उपदेशवाक्यार्थनिरूपणानन्तरमित्यर्थः।

ब्रह्म विषयीकृत्य तद्गताज्ञानमेव बाधते। तदा पटकारणतन्तुदाहे पटदाहवदखिलकारणेऽज्ञाने बाधिते सति तत्कार्यस्याखिलस्य बाधितत्वात्तदन्तर्भूताखण्डाकाराकारिता चित्तवृत्तिरपि बाधिता भवति। तत्र प्रतिबिम्बितं चैतन्यमपि यथा दीपप्रभाऽऽदित्यप्रभावभासनाऽ

---

अनुभववाक्यार्थ इति। अनुभवस्य "ब्रह्मतत्वसाक्षात्कारस्य" प्रतिपादकं यद्वाक्यं तस्यार्थः। एवं वक्ष्यमाणप्रकारेण। अधिकारिणश्चित्तवृत्तिरुदेतीति संबन्धः। वाक्येन। तत्त्वमसीति वाक्येन। अखण्डार्थेऽवबोधिते इति। जहदजहत्स्वार्थलक्षणया विरुद्धांशपरित्यागेनाऽखण्डार्थचैतन्ये ज्ञाते सतीत्यर्थः। अखण्डाऽऽकाराऽऽकारितेति। अखण्डाऽऽकारगोचरेत्यर्थः। उदेतीति। सा एतद्वाक्यस्य शक्योर्थ इति शेषः। अहं ब्रह्मास्मीति चित्तवृत्तिरेव तत्त्वज्ञानम्। त्वं न संसारी, किन्तु सकलधर्मरहितं चिदानन्दैकरसं ब्रह्मैवाऽसीति दयालुनाऽऽचार्येण कथं चिद्बोधितस्याधिकारिणः "अहंब्रह्मास्मीति" साक्षात्कारोभवतीति भावः। न च शब्दस्य परोक्षज्ञानजनकत्वस्वाभाव्यान्न तेनाऽपरोक्षा चित्तवृत्तिरुदेतीति वाच्यम्। यत्साक्षादपरोक्षाद् ब्रह्मेति श्रुत्या वाक्यानामपि अपरोक्षजनकत्वात्। एवमुत्पन्नाया अखण्डाकारचित्तवृत्तेः प्रयोजनमाह। सा तु इति। चित्तवृत्तिस्तु इत्यर्थः। तद्गताऽज्ञानमेव बाधते इत्यन्वयः। तद्गतेति। ब्रह्मविषयकेत्यर्थः। एवकारेण वृत्तेश्चैतन्यप्रकाश्यत्वव्यवच्छेदः। वृत्तेर्जडत्वादज्ञानबाधनाऽसंभवः, ज्ञानस्यैवाऽज्ञाननाशकत्वादित्यतस्तां विशिनष्टि। चित्प्रतिबिंबसहिता सतीति। चिति "चैतन्ये" प्रतिबिंबः, तेन सहिता सतीत्यर्थः। चिति व्याप्तेति यावत्। तथा च चैतन्यप्रतिबिंबसंवलिततया तादृशचित्तवृत्त्या चैतन्यगतमज्ञानं निवर्त्यते, तस्याश्चैतन्यावरकाऽज्ञाननिवृत्तिरेव प्रयोजनमिति भावः। ननु "अहंब्रह्मास्मीति" चित्तवृत्त्या संसारमूलाऽज्ञाने बाधितेपि तादृशचित्तवृत्तेर्निवृत्त्यर्थं वृत्त्यन्तरमपेक्षणीयं न वा—आद्येऽनवस्था। अन्त्ये च तन्निवर्तकाभावेन तस्याः सत्वेन द्वैतापत्तिरित्यत आह। तदेति। संसारमूलाऽज्ञाने बाधिते सतीत्यर्थः। तत्कार्यस्येति। अज्ञान-

समर्था सती तया अभिभूता भवति, तथा स्वयं प्रकाशमानप्रत्यगभिन्नपरब्रह्मावभासनानर्हतया तेनाभिभूतं सत् स्वोपाधिभूताखण्डवृत्तेर्बाधितत्त्वाद्दर्पणाभावे मुखप्रतिबिम्बस्य मुखमात्रत्ववत् प्रत्यगभिन्नपरब्रह्ममात्रं भवति ।

एवं च सति 'मनसैवानुद्रष्टव्यम्' यन्मनसा न मनुते' इत्य-

असमर्थ होती हुई स्वयं अपने ही अभिभूत हो जाती है, उसी प्रकार स्वयं प्रकाशमान प्रत्यगभिन्न परब्रह्म को अवभासन ( प्रकाश ) करने में अनर्ह ( असमर्थ ) होने के कारण स्वयं प्रकाशस्वरूप ब्रह्मचैतन्य से अभिभूत हो जाता है। जैसे दर्पण के अभाव हो जाने पर मुख का प्रतिबिम्ब केवल मुख ही रह जाता है, अर्थात् दर्पण में स्थित प्रतिबिम्ब दर्पण के न रहने पर मुखमात्र भासित होता है उसी प्रकार उपाधिभूत अन्तःकरण की वृत्ति में जो चैतन्य का प्रतिबिम्ब पड़ रहा है, वृत्ति के बाधित हो जाने से बिम्बस्थानीय प्रत्यगभिन्न परब्रह्ममात्र ही बच जाता है। इसके बाद ज्ञानी लोगों को "मैं ब्रह्म हूँ" यह अनुभव होता है।

इस प्रकार अर्थात् अखण्डाकाराकारित अन्तःकरणवृत्तिद्वारा ब्रह्मविषयक अज्ञान का दूरीकरण अवश्य होता है परन्तु उस वृत्ति में प्रतिफलित चैतन्य स्वयं प्रकाशस्वरूप चिदात्म परब्रह्म का प्रकाश नहीं हो सकता इसीलिये "मनसैवानुद्रष्टव्यम्" "यन्मनसा न मनुते" इन दोनों श्रुतियों में विरोध नहीं हुआ, क्यों कि

---

कार्यस्येत्यर्थः। तदन्तर्भूतेति। अखिलकार्यान्तर्भूतेत्यर्थः। अखण्डाकारचित्तवृत्तेरपि अज्ञानकार्यान्तर्भूतत्वात्तत्कारणाऽज्ञाननाशे तन्नाशान्नाद्वैतहानिरिति भावः। अथ तर्हि "अहं ब्रह्मास्मी" ति त्विचत्तवृत्तिप्रतिबिंबित चैतन्यस्य का गतिरित्यत आह। तत्रेति। वृत्तावित्यर्थः। तत्र प्रतिबिंबितचैतन्यमपि अखण्डचित्तवृत्तेर्बाधितत्वात्प्रत्यगभिन्नं परब्रह्ममात्रं भवतीत्यन्वयः। परिच्छिन्नप्रकाशस्याऽपरिच्छिन्नाऽनवभासने दृष्टान्तमाह। यथेति। तया। आदित्यप्रभया। दार्ष्टान्ते योजयति। तथेति। तेनेति। तादृशपरब्रह्मणेत्यर्थः। स्वोपाधिभूतेति। "अहंब्रह्मास्मी"ति चित्तवृत्तिप्रतिबिंबितचैतन्योपाधिभूतेत्यर्थः। स्वोपाधिविलये उपहितस्य स्वस्वरूपमात्रावस्थाने दृष्टान्तमाह। दर्पणाभावे इति। वृत्तिनिवृत्तौ तत्प्रतिबिंबितचैतन्यस्य बिंबाऽवभासनाऽसमर्थत्वात् वृत्तिरूपोपाधि-

नयोः श्रुत्योरविरोधः, वृत्तिव्याप्यत्वाङ्गीकारेण फलव्याप्यत्वप्रतिषेधप्रतिपादनात् । तदुक्तम्—

फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् ।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ॥

इति स्वयंप्रकाशमानत्वान्नाभास उपयुज्यते । जड़पदार्थाका-

ब्रह्मविषयक आचार्योपदेश के अनु=पश्चात्, संस्कृत-मन (अन्तःकरण) से ही विशुद्ध ब्रह्म का अज्ञान निवृत्तिपूर्वक स्वरूप ज्ञान होता है अर्थात् वृत्ति का विषय ब्रह्म होता है, यह "मनसैवानु द्रष्टव्यम्" इस श्रुति का आशय है। [श्रुति का अर्थ है कि—अनु=पश्चात्, अर्थात् अज्ञान निवृत्तिरूप आवरणभंग के बाद मन से ही ब्रह्म का दर्शन करना चाहिए] और "यन्मनसा न मनुते" यत्=जो प्रसिद्ध चैतन्य ज्योति को कोई भी व्यक्ति मन से नहीं जान सकता है, इससे फल व्याप्यत्व (फल=प्रत्यक्ष, विषयता) का प्रतिषेध किया है। वही—'फलव्याप्यत्वम्' इत्यादिकारिका से कहा है। इसलिये ब्रह्म के स्वयंप्रकाश होने के नाते ब्रह्म के प्रकाश के लिये चिदाभास की कोई उपयोगिता नहीं है। प्रश्न—ब्रह्माकारा-

---

बाधेन तत्प्रतिबिंबितचैतन्यं चैतन्यमात्रतयाऽवशिष्यते, दर्पणरूपोपाधिविगमे तत्प्रतिबिंबितमुखस्य मुखमात्रतावशेषवदित्यर्थः ।

श्रुत्योर्विरोधं परिहरति । एवं च सतीति । उक्तप्रकारेणाऽज्ञातचैतन्यस्य वृत्तिव्याप्यत्वांगीकारेण फलव्याप्यत्वे प्रतिषिद्धे सतीत्यर्थः । वृत्तिव्याप्यत्वं-वृत्तिविषयत्वम् । तच्च ब्रह्मात्मनि स्वीकार्यम्, अहं ब्रह्मास्मीतिवृत्तेः स्वीकारात्, वृत्तिं विना ब्रह्मसाक्षात्कारानुपपत्तिप्रसंगात् । फलव्याप्यत्वं च फलविषयत्वम् । फलं च विषयेऽभिव्यक्तं चैतन्यम् । चैतन्ये च न चैतन्याभिव्यक्तिः, आत्माश्रयात्, स्वप्रकाशत्वाच्चेति भावः । अन्तःकरणवृत्तिरावरणनिवृत्त्यर्थमज्ञानावच्छिन्नं चैतन्यं व्याप्नोतीति चैतन्यस्य वृत्तिव्याप्यत्वमङ्गीक्रियते, आवरणनिवृत्त्युत्तरं ब्रह्मणः स्वप्रकाशत्वात्स्वयं प्रकाशते । तदेवाह फलव्याप्यत्वप्रतिषेधप्रतिपादनादिति प्रयोजनाभावादिति शेषः । तदुक्तमिति । पञ्चदश्यामिति शेषः । अस्य । चैतन्यस्य । आभासः । वृत्तिप्रतिबिंबितचैतन्यम् । तद्गतेति । घटविषय

राकारितचित्तवृत्तेर्विशेषोऽस्ति। तथाहि यथा 'अयं घटः' इति घटाकाराकारितचित्तवृत्तिरज्ञातं घटं विषयीकृत्य तद्गताऽज्ञाननिरसनपुरःसरं स्वगतचिदाभासेन जडमपि भासयति। तदुक्तम्—

बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम्।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥ इति ॥

यथा दीपप्रभामण्डलमन्धकारगतं घट-पटादिकं विषयीकृत्य तद्गतान्धकारनिरसनपुरःसरं स्वप्रभया तदपि भासयति।

एवंभूतस्वस्वरूप चैतन्यसाक्षात्कारपर्यन्तं श्रवणमनननिदिध्यासनसमाध्यनुष्ठानस्यापेक्षितत्वात्तेऽपि प्रदर्श्यन्ते। श्रवणं नाम षड्विधलिङ्गैरशेषवेदान्तानामद्वितीये वस्तुनि तात्पर्यावधारणम्।

कारित अन्तःकरण की वृत्ति से जडपदार्थों ( घट-पट आदि ) काराकारितवृत्ति की क्या विशेषता है। उत्तर—विशेषता यह है कि 'अयं घटः' यह घटाकाराकारितचित्तवृत्ति अज्ञात घट को विषय करके घट-पट आदि गत अज्ञान का निरास करती हुई वृत्ति में प्रतिबिम्बित चिदाभास के द्वारा जड घट का भी प्रकाश कर देती है। यही कहा है—बुद्धि और बुद्धि में प्रतिबिम्बित चिदाभास ये दोनों घट को व्याप्त कर लेते हैं। उनमें धी=अन्तःकरणवृत्ति से अज्ञान का नाश होता है और चिदाभास ( चैतन्य ) से घट का स्फुरण ( प्रकाश ) हो जाता है। जैसे दीपक का प्रकाश अन्धेरे में रक्खे हुए घट-पट आदि पदार्थों को विषय करके घट-पट आदि गत आवरणरूपी अन्धकार को दूर कर देता है, तथा वह दीपक अपने प्रकाश से घट-पट आदि को भी प्रकाशित कर देता है।

---

केत्यर्थः। स्वगतेति। वृत्तिप्रतिबिंबितेत्यर्थः। वृत्तिर्हि उत्पद्यमाना चिद्व्याप्तैवोत्पद्यते, वृत्तेस्तथैवस्वभावात्। तथा च यथा घटाकाराचित्तवृत्तिर्घटविषयकाऽज्ञानं दूरीकरोति, अथ वृत्तिगतचिदाभासो घटं प्रकाशयति, तथैवाऽहंब्रह्मास्मीत्याकाराचित्तवृत्तिः, ब्रह्मविषयकाऽज्ञानं दूरीकरोति किन्तु तादृशवृत्तिगतचिदाभासस्याऽत्र सत्वेपि नोपयोगः स्वप्रकाशत्वाद् ब्रह्मण इति तत्त्वम्। अत्रानुरूपं दृष्टान्तमाह। यथेति। तद्गतेति। घटपटादि-

लिङ्गानि तूपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्त्याख्यानि। तत्र प्रकरणप्रतिपाद्यस्यार्थस्य तदाद्यन्तयोरुपपादनमुपक्रमोपसंहारौ। यथाछान्दोग्ये षष्ठाध्याये प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः 'एकमेवाद्वितीयम्' इत्यादौ 'ऐतदात्म्यमिदं सर्वम्' इत्यन्ते च प्रतिपादनम्। प्रकरणप्रतिपाद्यस्य वस्तुनस्तन्मध्ये पौनःपुन्येन प्रतिपादनमभ्यासः। यथा तत्रैवाद्वितीयवस्तुनि मध्ये तत्त्वमसीति नवकृत्वः

इस प्रकार स्वरूप चैतन्य के साक्षात्कार होने तक श्रवण, मनन, निदिध्यासन, समाधि, अनुष्ठान ये पाँच भी अत्यन्त अपेक्षित हैं अतः इन्हें भी दिखाते हैं। श्रवण—समस्तवेदान्त वाक्यों का अद्वितीयब्रह्म में ही षड्विधलिङ्गों द्वारा तात्पर्य समझना ही श्रवण है। उपक्रम-उपसंहार-अभ्यास-अपूर्वता-फल-अर्थवाद—और उपपत्ति ये छः प्रकार के लिंग हैं। जिस प्रकरण में जो अर्थ (वस्तु) प्रतिपाद्य हो उस वस्तु का उस प्रकरण में आदि से लेकर अन्त तक उपादान करने को उपक्रमोपसंहार कहते हैं। जैसे छान्दोग्य के षष्ठ अध्याय के आरम्भ में प्रकरणप्रतिपाद्य अद्वितीयब्रह्मरूप वस्तु का 'एकमेवाद्वितीयम्' इस रूप से प्रतिपादन करते हुवे फिर अन्त में भी "ऐतदात्म्यमिदं सर्वम्" अर्थात् यह समस्त जगत् अद्वितीयब्रह्मरूप ही है ऐसा अन्त में प्रतिपादन किया है। प्रकरणप्रतिपाद्य वस्तु का बीच-बीच में बार-बार प्रतिपादन करना यही अभ्यास है। जैसे—छान्दोग्य में ही अद्वितीयब्रह्मरूप वस्तु के विषय में 'तत्त्वमसि" को नौ बार

---

गतेत्यर्थः। तदपीति। घटपटादिकमपीत्यर्थः। तात्पर्यावधारणमिति। तात्पर्यावधारणानुकूलोविचार इत्यर्थः।

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये इति पद्यमवलंब्याह। लिङ्गानि तु इति। उपक्रमोपसंहारौ एकं लिंगम्। प्रकरणप्रतिपाद्यस्येति। प्रकरणं चोभयाकांक्षम्। तदाद्यन्तयोरिति। प्रकरणाद्यन्तयोरित्यर्थः तथा च तत्प्रतिपाद्यस्य वस्तुन आदौ प्रतिपादनमुपक्रमः। अन्ते च प्रतिपादनमुपसंहारः। तदुभयमुदाहरति। यथेति। एकमेवाऽद्वितीयमिति। तद्भिन्नं सजातीयं विजातीयं वा किमपि नास्तीत्यर्थः। एवमादावद्वितीयवस्तुप्रतिपादनमुप-

प्रतिपादनम्। प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः प्रमाणान्तराविषयीकरणमपूर्वता। यथा तत्रैवाद्वितीयवस्तुनो मानान्तराविषयीकरणम्। फलन्तु प्रकरणप्रतिपाद्यस्यात्मज्ञानस्य तदनुष्ठानस्य वा तत्र तत्र श्रूयमाणं प्रयोजनम्। यथा तत्र आचार्यवान् पुरुषोवेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इत्यद्वितीयवस्तुज्ञानस्य

करके प्रतिपादन किया है। प्रकरणप्रतिपाद्य अद्वितीयब्रह्मरूप वस्तु के विषय में किसी दूसरे प्रमाण का आधार न लेना ही अपूर्वता कहलाती है, जैसे—छान्दोग्य में ही ब्रह्म उपनिषत् मात्र वेद्य है प्रमाणान्तर का विषय नहीं है—ऐसा कहा है यही ब्रह्म की अपूर्वता है। प्रकरणप्रतिपाद्य आत्मज्ञान का तथा आत्मज्ञान के करणीभूत श्रवण आदि के अनुष्ठान का उन-उन प्रकरणों में सुना हुआ जो प्रयोजन वही फल है। जैसे—छान्दोग्य में "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये इति" अर्थ—आचार्यवान् पुरुष ही उस सूक्ष्म तत्त्व को जानता है, उस आचार्यवान् (अविद्या के बन्धन से शून्य) को तभी तक चिर (विलम्ब) है, जब तक भोग से प्रारब्धकर्मों का विनाश हो जाने से

---

क्रमः। ऐतदात्म्यमिति। इदं सर्वं दृश्यमानमद्वितीयवस्तुव्यतिरेकेण नास्तीत्यर्थः। अन्ते चेति। प्रकरणस्यान्ते चेत्यर्थः। प्रतिपादनमिति। उपसंहार इति शेषः। अभ्यासं निरूपयति। प्रकरणेति। तन्मध्ये। प्रकरणमध्ये। अभ्यासमुदाहरति। यथेति। नवकृत्वः। नववारम्। अपूर्वतां निरूपयति। प्रकरणेति। उदाहरति। यथेति। तत्रैव। छान्दोग्ये एव। मानान्तरेति। श्रुत्यतिरिक्तं मानं मानान्तरं तदगोचरत्वमपूर्वत्वमित्यर्थः। तस्योपनिषन्मात्रगम्यत्वादिति भावः। फलं निरूपयति। प्रकरणेति। तदनुष्ठानस्य वेति। ज्ञानानुकूलश्रवणाद्यनुष्ठानस्य वेत्यर्थः। श्रवणाद्यनुष्ठानस्योपस्थितत्वात्। तत्प्रयोजनश्रुतिं तावदुदाहरति। यथेति। आचार्यवान्। गुरुमुखाच्छ्रुतवेदार्थः। वेद। अहं ब्रह्मास्मीति साक्षात्करोति। तत्त्वमस्यादिवाक्यैरिति शेषः। तस्य ब्रह्मसाक्षात्कारवतः। यावन्न विमोक्ष्ये। प्रारब्धफलभोगेन बन्धान्न मुच्यते।

तत्प्राप्तिः प्रयोजनं श्रूयते। प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनमर्थवादः। यथा तत्रैव उत तमादेशमप्राक्ष्यो येनाश्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इत्यद्वितीयवस्तुप्रशंसनम्। प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिरुपपत्तिः। यथा तत्र सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारंभणं विकारो

देहपात नहीं होता है, देहपात के बाद ही वह विदेहमुक्त हो जाता है। सो यहाँ अद्वितीयब्रह्म के ज्ञान का फल अद्वितीय वस्तु (मोक्ष) प्राप्ति ही बतलाई है। प्रकरणप्रतिपाद्य वस्तु की बार-बार प्रशंसा को अर्थवाद कहते हैं—जैसे "उत तमादेशमप्राक्ष्योयेनाश्रुतंश्रुतं भवति, अमतं मतं, अविज्ञातं विज्ञातम्" अर्थात्— हे शिष्य तुमने जो ब्रह्मस्वरूप उपदेश पूछा था उसे सुनो जिससे अश्रुत श्रुत, भूला हुआ मत (स्मृत) अविज्ञात ज्ञात हो जाता है उसे तू ब्रह्म जान। प्रकरणप्रतिपाद्य वस्तु को प्रमाणित करने की युक्ति को उपपत्ति कहते हैं—जैसे— छान्दोग्य में कहा है कि—"सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" अर्थ—हे सौम्य! जैसे एक मिट्टी के पिण्ड का ज्ञान हो जाने से मिट्टी की बनी सब वस्तुओं का ज्ञान हो जाता है

---

तावदेवचिरम्। अज्ञाननिवृत्तौ सत्यां तावत्कालमवस्थानम्। अथ। भोगेन प्रारब्धे क्षीणे। संपत्स्ये। ब्रह्म संपद्यते-परमात्मा भवतीत्यर्थः। अद्वितीयवस्तुज्ञानस्येति। श्रवणाद्यनुष्ठानस्य वेति शेषः। तत्प्राप्तिः। ज्ञानप्राप्तिश्चैतन्यप्राप्तिश्च।

अर्थवादं निरूपयति। प्रकरणप्रतिपाद्यस्येति। ब्रह्मण इत्यर्थं। उदाहरणं दर्शयति। उत। अपि। आदिश्यते असौइति आदेशोर्थः। तमर्थं। ब्रह्म लक्षणं अप्राक्ष्यः पृष्टवानसि, येनादेशेन श्रुतेन ब्रह्मणाऽश्रुतं श्रुतं भवति तमादेशमप्राक्ष्य इति पूर्वेणाऽन्वयः। एवमेव सर्वत्रान्वयोबोध्यः उपपत्तिमाह। प्रकरणप्रतिपाद्यर्थसाधने इति। ब्रह्मैक्यसिद्धावित्यर्थः। उदाहरति। यथेति। अत्र कथं नु भगवः स आदेशोभवतीति "प्रश्न" श्रुतिः। कथं नु केनप्रकारेण हे भगवः स आदेशो भवतीति श्रुत्यर्थः।

नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादावद्वितीयवस्तुसाधने विकारस्य वाचारंभणमात्रत्वे युक्तिः श्रूयते ।

मननं तु श्रुतस्याद्वितीयवस्तुनो वेदान्तानुगुणयुक्तिभिरनवरतमनुचिन्तनम् । विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुसजाती-

और मिट्टी की बनी हुई घट-नांद आदि सब वस्तुएँ मृत्तिकास्वरूप ही हैं केवल घट आदि यह नामस्वरूप विकार वाणी का आलम्बनमात्र है, वास्तविक में उनका कारण जो मिट्टी वही सत्य है। इसी प्रकार अद्वितीयब्रह्मरूप वस्तु के साधन ( प्रतिपादन ) में भी यह नाम-रूपात्मक जगत् वाणी का आलम्बनमात्र ब्रह्म ही वस्तुतः सत्य वस्तु है।

वेदान्त के अनुगुण ( अनुकूल ) युक्तियों के द्वारा श्रवण किये हुये अद्वितीय-ब्रह्म का निरन्तर चिन्तन करना यही मनन है। विजातीय ( ज्ञानविरोधी ) देहादि जडपदार्थ के ज्ञानप्रवाह का परित्याग करके अर्थात् भेदभावना को सर्वथा दूर

---

श्वेतकेतोः पितरं प्रति प्रश्नः । पिता चाह । यथा- लोकेऽहे सौम्य एकेन मृत्पिण्डेन कारणी भूतेन विज्ञातेन सर्वं मृन्मयं मृद्विकारं दात्तं घटादि विज्ञातं स्यात्, कार्यस्य कारणानन्यत्वादित्यर्थः । कथं तर्हि कार्यकारणभेदव्यवहार इत्यत आह । वाचेति । वाचाऽऽरभ्यते इति वाचारंभणं वागालंवनं विकार उच्यते, परन्तु न परमार्थतो वस्तु अस्ति, यतो नामधेयं "नामैवेतिनामधेयं" नाममात्रं नाऽर्थोऽस्तीत्यर्थः । तर्हि किमस्तीत्यत आह । मृतिकेति । मृतिकेत्येव मृत्तिकैव तु सत्यम्, वस्तुषु व्यावर्त्तमानेषु अनुस्यूतत्वादित्य क्षरार्थः ।

अतो मृद्ज्ञानेन घटादिज्ञानं युक्तमिति निष्कर्षः । एवं च चिद्विवर्तस्य प्रपञ्चस्य वाचारंभणमात्रत्वाच्चिन्मात्रमवशिष्यते, रज्जुविवर्तस्य सर्पस्य रज्जुमात्रावशेषवदिति भावः ।

मननं निरूपयति । श्रुतस्येति । वेदान्तानुगुणेति । इदं च पुरुषबुद्ध्युत्प्रेक्षितशुष्कतर्कव्यावृत्त्यर्थम् । अनवरतमिति । शरीरयात्रासमयातिरिक्तसमये इत्यर्थः । निदिध्यासनं निरूपयति । विजातीयेति ।

यप्रवाहोनिदिध्यासनम्। समाधिर्द्विविधः सविकल्पको निर्विकल्पकश्चेति। तत्र सविकल्पको नाम ज्ञातृज्ञानादिविकल्पलयानपेक्षयाऽद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरवस्थानम्। तदामृन्मयगजादिभानेऽपि मृद्भानवद्द्वैतभानेऽपि अद्वैतं वस्तु भासते। तदुक्तम्—

"दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम्।
अलेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्तमोम्॥इति॥

करके अद्वितीयब्रह्मरूप वस्तु के सजातीय ज्ञान प्रवाह को निदिध्यासन कहते हैं। समाधि दो प्रकार की है सविकल्पक और निर्विकल्पक। ज्ञाता-ज्ञान-ज्ञेय इनके विकल्प ( भेद ) के लय ( अभाव ) की अपेक्षा न करते हुये अर्थात् ज्ञाता-ज्ञेय-ज्ञान इनका भेद ज्ञान होते हुये भी "अहंब्रह्मास्मि" इस रूप से अखण्डाकाराकारित चित्तवृत्ति की स्थिति हो जाना यही सविकल्पक समाधि कहलाती है। सविकल्पक अवस्था में मिट्टी के हाथी का भान होने पर भी यह हाथी मिट्टी ही है उसी प्रकार द्वैत भासने पर अद्वैत वस्तु ब्रह्म भासता रहता है। कहा भी है— दृशि ( साक्षि ) स्वरूप, गगन के समान सर्वत्र व्यापक एवं निर्लेप, हमेशा एक रूप से भासित होनेवाला, जन्मरहित, एक, अविनाशी, अविद्या आदि दोषों से

---

देहादिप्रत्ययेति। देहादिविषयकप्रत्ययेत्यर्थः। तथा च विजातीयदेहादिविषयकप्रत्ययनिराकरणेनाऽद्वितीयवस्तुविषयकसजातीयप्रत्ययप्रवाहीकरणं निदिध्यासनमित्यर्थः।

वृत्त्यन्तरनिरोधपूर्वकाऽऽत्मगोचरधारावाहिकचित्तवृत्तिः समाधिः। तं विभजते। सविकल्पकोनिर्विकल्पकश्चेतीति। संप्रज्ञातो संप्रज्ञातश्चेत्यार्थः। तत्र। तयोर्मध्ये। ज्ञाता ज्ञानं ज्ञेयं चेति योविकल्पः विभागोल्लेखः तस्य लयो ऽभावः तदनपेक्षया ज्ञात्रादिविभागोल्लेखपूर्वकमिति यावत्। तदा। सविकल्पकसमाध्यनुभवकाले। ज्ञात्रादिभेदप्रतीतावपि अद्वैतं वस्तु भासते एवेति सम्बन्धः। दृष्टान्तमाह। मृन्मयेति। अस्मिन्नर्थे सम्मतिमाह। तदुक्तमिति। ओमिति परब्रह्म तदेवाहमित्यन्वयः। दृशिस्वरूपमिति। दृशिः स्वरूपं यस्य तत्। साक्षि-

निर्विकल्पकस्तु ज्ञातृज्ञानादिविकल्पलयापेक्षयाऽद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरतितरामेकीभावेनावस्थानम् तदा तु जलाकाराकारितलवणानवभासेन जलमात्रावभासवद द्वितीयवस्त्वाकाराकारितचित्तवृत्त्यनवभासेनाद्वितीयवस्तुमात्र मवभासते। ततश्चास्य सुषुप्तेश्चाभेद शंका न भवति। उभयत्र वृत्त्यभाने समानेऽपि तत्सद्भावासद्भावमात्रेणानयोर्भेदोपपत्तेः ॥

सर्वथा शून्य, सर्वत्र विद्यमान, एवं सजातीय-विजातीय तथा स्वागत भेद से शून्य तथा एक है, मुक्त स्वभाव, जो कार्य-कारणात्मक उपाधि से शून्य, एवं निरतिशयानन्दस्वरूप जो परब्रह्म (ॐ) है वह मैं ही हूँ। ज्ञाता-ज्ञान-ज्ञेय—इनका अभेद होते हुये भी अद्वितीय वस्तु में ही अखण्डाकाराकारितचित्तवृत्ति की अत्यन्त एक रूप से स्थिति हो जाना ही निर्विकल्पक समाधि कहलाती है। इस समाधि काल में जैसे जल में मिले हुये लवण के अवभास न होने के नाते जलमात्र का ही अवभास जैसे होता है उसी प्रकार अद्वितीय वस्तु जो ब्रह्म-तदाकाराकारित चित्तवृत्ति बिल्कुल नहीं भासती बल्कि अद्वैत ब्रह्म ही एकमात्र भासता है। इसी कारण से निर्विकल्पक समाधि का सुषुप्ति से अभेद की शंका नहीं हो सकती है। यद्यपि वृत्ति का भान न होना उभयत्र समान है। तथापि वृत्ति के सद्भाव-असद्भाव प्रयुक्त इनमें भेद स्पष्ट है अर्थात् सुषुप्ति में वृत्ति नहीं रहती है और समाधि अवस्था में रहती है।

---

स्वरूपमित्यर्थः। गगनोपममिति। गगनमुपमा यस्य तत्। गगनवन्निर्लेपस्वरूपमित्यर्थः। सकृद् विभातं सर्वदैकरूपेणाभासमानम्। अजं। जन्मरहितम्। एकं सजातीयद्वितीयरहितम्। अक्षरं विनाशधर्मराहित्ये न कूटस्थरूपम्। अलेपकं लेपः संसारः। असंगत्वादविद्यादिदोषरहितम्। सर्वगतं सर्वत्र व्याप्तम्। यदद्वयं स्वगतभेदशून्यम्। सततं सर्वदैव। विमुक्तमिति। न कदाचिद्बद्ध इत्यर्थः। तथा च भागवते [ "बद्धोमुक्त इति व्याख्या गुणतो मे न वस्तुत" इति ]।

तदेव चेति। तथा च न ज्ञातृज्ञेयादिविकल्पलय इति भावः। तदाकाराकारितायाः। अद्वितीयवस्तुमात्रविषयकायाः। अतितरा-

अस्याङ्गानि यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयः। तत्र "अहिंसा सत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः"। "शौचसन्तोषतपः स्वाध्यायेश्वरप्रणिधानानिनियमाः"। करचरणादिसंस्थानविशेषलक्षणानि पद्मस्वस्तिकादीन्यासनानि। रेचकपूरक-कुम्भकलक्षणाः प्राणनिग्रहोपायाः प्राणायामाः। इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः। अद्वितीयवस्तुनि विच्छिद्य विच्छिद्यान्तरिन्द्रियवृत्तिप्रवाहोध्यानम्। समाधिस्तूक्तः सविकल्पक एव।

इस निर्विकल्पक समाधि के यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधि ये आठ अङ्ग हैं। उनमें अहिंसा-सत्य-अस्तेय ( चोरी न करना ) ब्रह्मचर्य, अपरिग्रह ( दान न लेना ) इन्हें यम कहते हैं। शौच ( पवित्रता ) सन्तोष-तप-स्वाध्याय और ईश्वर प्रणिधान इनको नियम कहते हैं। हाथ-पैर आदि के संस्थान विशेष स्वस्तिक-पद्म इत्यादि को आसन कहते हैं। रेचक ( नासिका द्वारा ऊपर खींची हुई वायु का छोड़ना ), पूरक ( नासिका द्वारा वायु का ऊपर खींचना ) कुम्भक ( उस वायु को बीच में रोक लेना ) स्वरूप जो प्राण वायु के निग्रह करने के उपाय उन्हें 'प्राणायाम' कहते हैं। अपने-अपने विषयों से इन्द्रियों का हटा लेना ही 'प्रत्याहार' कहलाता है। अन्तरिन्द्रिय ( अन्तःकरण ) का अद्वितीय ब्रह्मरूप वस्तु में लगा देने को 'धारणा' कहते हैं। उसी अद्वितीयब्रह्मस्वरूप में चित्तवृत्ति के प्रवाह का नाम 'ध्यान' है और समाधि तो हम पहिले कही चुके हैं कि सविकल्प समाधि है। इस प्रकार इन आठ अङ्गों

---

मिति। विस्पष्टमनवस्थानादिति भावः। अतितरामेकीभावेनाऽवस्थाने दृष्टान्तः तदाम्बिति। दार्ष्टान्तिके योजयति। अद्वितीयेति। सुषुप्तावतिव्याप्तिं वारयति। ततश्चेति। तत्र हेतुमाह। उभयत्रेति। समाधिसुषुप्त्योरित्यर्थः। तत्सद्भावेति। वृत्तिसद्भावेत्यर्थः। समाधौ वृत्तिः स्वीक्रियते किन्तु तस्याः भानं न स्वीक्रियते, सुषुप्तौ तु वृत्तिरेव न

एवमस्याङ्गिनो निर्विकल्पकस्य लयविक्षेपकषायरसास्वादनलक्षणाश्चत्वारो विघ्नाः संभवन्ति। लयस्तावदखण्डवस्त्वनवलम्बनेन चित्तवृत्तेर्निद्रा। अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेरन्यावलम्बनंविक्षेपः। लयविक्षेपाभावेऽपि चित्तवृत्ते रागादिवासनया

वाला निर्विकल्पकसमाधि के लय-विक्षेप-कषाय-रसास्वादन ये चार प्रकार के विघ्न होते हैं। अखण्डब्रह्मरूपवस्तु के अवलम्बन करने में अशक्त जो चित्तवृत्ति उसे 'लय' कहते हैं। अखण्डब्रह्मरूपवस्तु को जानने के लिये अन्तर्मुख हुयी चित्तवृत्ति का जो उसे ग्रहण करने में असमर्थ हो जाने पर बाद में बाह्यविषयों के ग्रहण

---

स्वीक्रियते इति विशेषः। अस्य। निर्विकल्पकसमाधेः। अत्र समाधिशब्देन सविकल्पकसमाधिरुच्यते। यमानाह। तत्रेति। यमादिषु मध्ये इत्यर्थः। नियमानाह। शौचेत्यादि। आसनान्याह। करचरणादीति। करचरणादीनां यः संस्थानविशेषस्तत्स्वरूपाणीत्यर्थः। आस्ते अनेन प्रकारेणेति आसनम्। निश्चलं सुखकरं च यत्तदासनम्। तद् द्विविधम्। बाह्यं शारीरं च। यत्र चैलाऽजिनकुशोत्तरं बाह्यम्। शारीरं पद्मस्वस्तिकादीति विशेषः। आदिना सिद्धासनादि चतुरशीतिभेदा बोध्याः। प्राणायामः श्वासप्रश्वासयोः शास्त्रोक्तरीत्या स्वाभाविकगतेः प्रतिरोधः। बाह्यवायोराचमनं श्वासः। कौष्ठ्यस्य वायोर्बहिर्निःसारणं प्रश्वासः। स च प्राणायामः पूरककुम्भकरेचकात्मतमरूपः। क्रमप्राप्तं प्रत्याहारं निरूपयति। इन्द्रियाणामिति। शुद्धचित्तस्य वैराग्याद्विषयेभ्योवियुज्य तत्वाभिमुखे सतीत्यादिः। इन्द्रियाणि विषयेभ्यः प्रातिलोम्येनाऽऽह्रियन्ते स्मिन्निति प्रत्याहारशब्दस्य व्युत्पत्तिः। धारणामाह। अद्वितीयवस्तुनीति। इदमुपलक्षणम्। नाभिचक्र-हृदय-नासादौ देशविशेषे इत्यपि बोध्यम्। अन्तरिन्द्रियधारणमिति। चित्तस्य स्थिरीकरणमित्यर्थः। ध्यानमाह। तत्रेति। तत्राऽऽद्यं विघ्नं लक्षयति। लयस्तावदिति। द्वितीयं लक्षयति। अखण्डेति। चित्तवृत्तेरिति। [illegible] इत्यादिः। तृतीयं विघ्नमाह। लयविक्षे-

स्तब्धी भावादखण्ड वस्त्वनवलम्बनंकषायः। अखण्डवस्त्ववलम्बनेनापि चित्तवृत्तेः सविकल्पकानन्दास्वादनं रसास्वादः। समाध्यारम्भसमये सविकल्पकानन्दास्वादनं वा।

अनेन विघ्नचतुष्टयेन विरहितं चित्तं निर्वातदीपवदचलं सदखण्ड चैतन्यमात्र मवशिष्यते यदा तदा निर्विकल्पकः समाधिरित्युच्यते।

करने में प्रवृत्त हो जाना यही 'विक्षेप' कहलाता है। लय और विक्षेप इन दोनों विघ्नों के न होने पर भी रागादि वासनावशात् चित्तवृत्ति की असामर्थ्य उसे 'कषाय' कहते हैं। अखण्डब्रह्मरूपवस्तु के अवलम्बन करने में असमर्थ अन्तःकरणवृत्ति द्वारा जो सविकल्पक आनन्द का अनुभव करना यही 'रसास्वादन' कहलाता है। अथवा निर्विकल्पक समाधि के प्रारंभ काल में सविकल्पक आनन्द के अनुभव को 'रसास्वादन' कहते हैं।

इन चार प्रकार के विघ्नों से रहित चित्त निर्वातस्थान में स्थितदीपक की तरह अचल होता हुआ एकमात्र अखण्ड चैतन्यमात्र में जब स्थित हो जाता है तब उस चित्त की निर्विकल्पक-समाधि कहलाती है। इसी निर्विकल्पक अवस्था को प्राप्त करने के लिये गौड़पाद ने कहा है कि--'लये सम्बोधयेच्चित्तम्' इत्यादि। अर्थात् लयरूप विघ्न उपस्थित हो जाने पर ( उस लयस्वरूप विघ्न को दूर करने के लिये ) चित्त को उद्बोधित करे अर्थात् चित्तगत जड़ता आदि धर्मों का दूरीकरण करते हुए चित्त उत्साहित करे और विक्षेप रूप विघ्न उपस्थित हो जाने

---

पाभावेपीति। रागादयस्त्रिधा बाह्या आभ्यन्तरा वासनामात्ररूपाश्च। बाह्याः पुत्रादिविषयाः। आभ्यन्तराः मनोराज्यादयः। संस्काररूपाः वासनामयाः। चतुर्थमाह। अखण्डेति। तथा च बाह्यप्रपञ्चनिवृत्तिजन्याऽऽनन्दं ब्रह्मानन्दस्य भ्रमेणाऽऽस्वादयति तद्रसास्वादनमित्यर्थः। लक्षणान्तरमाह। समाध्यारम्भसमये इति। निर्विकल्पकसमाध्यारंभकाले इत्यर्थः। सविकल्पकाऽऽनन्दाऽऽस्वादनं वेति। सविकल्पकानन्दत्यागासमर्थतया पुनस्तस्यैवा स्वादनमित्यर्थः। विघ्नचतुष्टयनिवृत्तेः फलमाह। अनेनेति। तत्परित्यागप्रकारमाह। लये इति। संबोधयेदिति। प्राणायामादिना चित्तमुत्थापयेदित्यर्थः। शमयेदिति।

तदुक्तम्—"लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत् पुनः। सकषायं विजानीयाच्छमप्राप्तं न चालयेत्।

नास्वादयेद्रसं तत्र निःसङ्गः प्रज्ञया भवेत्" इत्यादि।

"यथा दीपो निवातस्थो नेंगते सोपमा स्मृता" इत्यादि च।

अथजीवन्मुक्तलक्षण मुच्यते। जीवन्मुक्तो नाम स्वस्वरूपाखण्डे ब्रह्मणि साक्षात्कृते सति अज्ञानतत्कार्यसञ्चित कर्मसंशय-

पर कुछ विचार करे, विचार यह करे कि रागादिवासना चित्त को सांसारिक विषयों की ओर ले जाती है इससे अद्वैत ब्रह्म की प्राप्ति सर्वथा असंभव है अतः कषायरूप विघ्न से चित्त को हमेशा निवृत्त रक्खे जिससे अखण्ड ब्रह्म की प्राप्ति हो जाय ऐसा विचार करके चित्त को जब शान्ति प्राप्त हो जाय तब उसी शान्ति में उसे स्थिर कर देना चाहिये, और शमप्राप्त को उसे विचालित न करे। उस समय कोई सविकल्पक आनन्द का आस्वादन न करे, तथा प्रज्ञा ( बुद्धि ) के द्वारा निःसङ्ग हो जाय। इस विषय में प्रमाण है कि—जिस प्रकार निर्वात स्थान में स्थित दीपक निश्चल हो जाता है उसी प्रकार विघ्नचतुष्टय से रहित चित्त की जो अखण्ड ब्रह्म में स्थिति हो जाना वही निर्विकल्पक समाधि है। इसीलिये निर्वात स्थान स्थित दीपक से निर्विकल्पक समाध्यवस्थापन्न चित्त की उपमा दी गयी है।

जीवन्मुक्त का लक्षण बतलाते हैं कि स्वस्वरूप अखण्ड ब्रह्म के साक्षात्कार हो जाने पर अज्ञान और अज्ञानकार्य जो जगत् तथा उनके द्वारा सञ्चित जो कर्म-संशय-विपर्यय ( भ्रम ) आदि हैं उनके बाध हो जाने से समस्त बन्धनों से शून्य जो ब्रह्मनिष्ठ उसे 'जीवन्मुक्त' कहते हैं। श्रुति भी प्रमाण है— उस परावर

---

दोषदर्शनब्रह्मानुसन्धानादिनेति शेषः। विजानीयादिति। समाध्यारंभसमये सविकल्पकानन्दं नास्वादयेदित्यर्थः। निःसङ्गः उदासीनः प्रज्ञया ब्रह्मप्रज्ञया।

जीवन्मुक्तस्य लक्षणमाह। जीवन्मुक्तोनामेति। ब्रह्मनिष्ठ इत्यनेन संबन्धः। ब्रह्मनिष्ठत्वं च वेदान्तवेद्यब्रह्मात्मनाऽवस्थितत्वम्। परमार्थतो ब्रह्मनिष्ठत्वममुक्तस्यापीत्यतोविशिनष्टि। अखिलबन्धरहित इति।

विपर्य्ययादीनामपि बाधितत्वादखिलबन्धरहितो ब्रह्मनिष्ठः।
"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। श्रु
क्षीयन्ते चास्यकर्माणि तस्मिन् दृष्टे परावरे"। इत्यादिश्रुतेः।
अयं तु व्युत्थानसमये मांसशोणित मूत्रपुरीषादि भाजनेन शरीरेण आन्ध्यमान्द्यापटुत्वादि भाजनेनेन्द्रियग्रामेण अशनाया-

स्वस्वरूप अखण्ड ब्रह्म के साक्षात्कार हो जाने पर हृदय ग्रन्थि अर्थात् हृदय (बुद्धि) में स्थित जो अविद्या प्रयुक्त वासना जन्य सांसारिक इच्छाएँ रूप ग्रन्थियाँ हैं उन सबका भेदन हो जाता है और समस्त ज्ञेयपदार्थ विषयक संशयों का छेदन हो जाता है। और इस पुरुष के पूर्वजन्य तथा जन्मान्तर में किये हुये समस्त कर्मक्षीण हो जाते हैं।

क्या जीवन्मुक्त पुरुष शरीर एवं चक्षु आदि इन्द्रियों को कुछ उपयोग में लेता है या नहीं। यदि जीवन्मुक्त पुरुष भी अपने शरीर तथा इन्द्रियों को विषयोपभोग में लेता है तो फिर मुक्त में बद्ध में क्या भेद है?

उत्तर—यह जीवन्मुक्त पुरुष व्युत्थान समय (जाग्रदवस्था) में मांस-शोणित (रुधिर) मूत्र-पुरीष (टट्टी) आदि के भाण्ड भूत शरीर के द्वारा,

---

प्रारब्धकर्ममात्रशेष इति यावत्। बन्धराहित्ये हेतुमाह। अज्ञानेति। प्रारब्धकर्मणां तु भोगेनैव क्षयः नाभुक्तं क्षीयते कर्मेति वचनात्। अज्ञानादिबाधन्ने हेतुमाह। स्वेति। तदज्ञानेति। ब्रह्मविषयकाऽज्ञानेने-त्यर्थः। संमतिमाह। भिद्यते इति। हृदयग्रन्थिः चिदचिद्ग्रन्थिः। अहंकार इति यावत्। परावरे। सर्वात्मके। अथवा परो हिरण्यगर्भः स अवरो न्यूनो यस्मात्तस्मिन्नित्यर्थः। जीवन्मुक्तस्य देहेन्द्रियादिषु "इन्द्रजालादिनिर्मितसौधादिवत्" बाधितत्वबुद्धेरनुवृत्त्या मिथ्यात्वेन न परमार्थतयेत्याह। अयन्तु इति। जीवन्मुक्तस्तु इत्यर्थः। व्युत्थानसमये इति। समाधेः सकाशादित्यादिः। ज्ञानाऽविरुद्धफलानी ति। ज्ञानाऽविरुद्धानि च तानि प्रारब्धकर्मफलानि चेति विग्रहः। बाधितत्वादिति। तथा च ब्रह्मतत्वसाक्षात्कारेणाऽज्ञानादिसकलप्रपञ्चनिवृत्तावपि भोगैकनाश्य-प्रारब्धस्यानुवृत्तेः पुनर्निवृत्तमपि प्रपंचं बाधितत्वबुद्धेरनुवृत्त्या पश्यती-

पिपासाशोक मोहादिभाजनेनान्तः करणेन च तत्तत्पूर्ववासनया क्रियमाणानि कर्माणि भुज्यमानानि ज्ञानविरुद्धा न्यारब्धफलानि च पश्यन्नपि बाधितत्वात् परमार्थतो न पश्यति यथा इदमिन्द्रजालमिति ज्ञानवान् तदिन्द्रजालं पश्यन्नपि परमार्थमिदमिति न पश्यति । "सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव समना अमना इव सप्राणोऽप्राण इव" इत्यादिश्रुतेः । उक्तञ्च–

"सुपप्तवज्जाग्रति यो न पश्यति द्वयञ्च पश्यन्नपि चाद्वयत्वतः ।
तथापि कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चयः" इति ॥

एवं अन्धत्व-बाधिर्य-पटुत्व आदि के पात्र स्वरूप इन्द्रियों के द्वारा, और भूख-प्यास-शोक-मोह के भाजन अन्तःकरण के द्वारा पूर्ववासना के कारण किये हुए प्रारब्ध कर्मों को तथा उपभोग करने के योग्य जो ज्ञान के अविरुद्ध प्रारब्ध कर्म जन्य फल हैं उनका उपभोग करता हुआ भी जीवन्मुक्त पुरुष तात्त्विक दृष्टि से उपभोग उसी प्रकार से नहीं करता है जिस प्रकार से ऐन्द्रजालिक ( जादूगर ) पुरुष के उस प्रदर्शन को इन्द्रजाल ( जादू ) समझकर "यह पारमार्थिक नहीं है" इस दृष्टि से देखता हुआ भी जैसे नहीं देखता है। इस विषय में श्रुति भी प्रमाण है कि जीवन्मुक्त पुरुष सचक्षु होता हुआ भी बाह्य विषयों में अचक्षु पुरुष की तरह व्यवहार करता है, कानवाला होता हुआ भी बधिर जैसा व्यवहार करता है, मनवाला होता हुआ भी मनोहीन जैसा व्यवहार करता है, सप्राण होता हुआ भी प्राण-रहित जैसा व्यवहार करता है। और भी कहा है कि—जो पुरुष जाग्रत् अवस्था में भी बाह्य पदार्थों को सोये हुये पुरुष के समान नहीं देखता है, तथा द्वैत को देखता हुआ भी अद्वैत रूप से व्यवहार करता है, एवं कर्म करता हुआ भी कर्त्तृत्व आदि के अभिमान से शून्य होने के नाते तथा कर्मों के फलों में निर्लिप्त होने के नाते निष्क्रिय है वही आत्मवेत्ता पुरुष जीवन्मुक्त है अन्य नहीं है।

---

त्यर्थः। जीवन्मुक्तो न परमार्थतो व्यवहरतीत्यत्र श्रुतिं प्रमाणयति। स चक्षुरिति ; चक्षुरादिमानपि चक्षुरादिहीन इव भवतीत्यर्थः। आदिना योजागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते।

अस्य ज्ञानात्पूर्वं विद्यमानानामेवाहार विहारादीनाम् अनुवृत्तिवच्छुभवासनानामेवानुवृत्तिर्भवति शुभाशुभयोरौदासीन्यं वा। तदुक्तम्—

"बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि। शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे।

प्रश्न—यदि जीवन्मुक्त पुरुष निर्बन्धन होने के नाते अपने को कर्त्ता न समझता हुआ स्वेच्छानुसार कर्म करता है तब तो अच्छे-बुरे सभी कर्म वह कर सकता है तो चोरी-वेश्यागमन आदि बुरे कर्म भी कर सकता है।

उत्तर—इस जीवन्मुक्त को तत्त्व ज्ञान हो जाने से पहिले ही शम-दम आदि गुणों के द्वारा अशुभवासनाओं का नाश हो जाने के नाते तत्त्व ज्ञान के पूर्व में जैसे इसकी आहार-विहार आदि कार्यों में प्रवृत्ति होती थी—उसी प्रकार तत्त्व ज्ञान के पश्चात् भी जीवन्मुक्त की शुभवासनाओं की अनुवृत्ति के फलस्वरूप शुभ कार्यों में ही प्रवृत्ति होती है। अथवा शुभ—और अशुभ दोनों कार्यों में उदासीन हो जाता है। कहा भी है कि—बुद्ध=जान लिया है, अद्वैत को सतत्त्व=यथार्थ रूप से जिसने ऐसा जीवनन्मुक्त पुरुष यदि यथेष्ट आचरण करता है तब अशुचि= अपवित्र पदार्थ के भक्षण में संलग्न जो कुत्ता तथा आत्मवेत्ता इन दोनों में क्या अन्तर रह जायगा। अतः जीवनन्मुक्त पुरुष यथेष्ट चरण नहीं करता है।

---

यस्य निर्वासनोबोध स जीवन्मुक्त उच्यते" इत्यादेः परिग्रहः। उक्तेऽर्थे स्मृतिमप्याह। उक्तंचेति। जाग्रतीति। जाग्रदवस्थायां द्वयं पश्यन्नपि सुषुप्तवत् सुषुप्तिंगतवत् विशेषतो न पश्यति स आत्मवित्। विशेषादर्शने हेतुरद्वयत्वत इति। द्वयस्य बाधितत्वादित्यर्थः। तथा कुर्वन्नपि न करोति यतो निष्क्रिय इति योजना। जीवन्मुक्तस्य नाऽशुभे प्रवृत्तिरित्याह। अस्येति। जीवन्मुक्तस्येत्यर्थः। विद्यमानानामेवेति। एवकारेणाऽविद्यमानानां व्यवच्छेदः। अशुभवासनानां ज्ञानात्प्रागेव शान्त्यादिगुणैर्निवर्तित्वान्न तासामनुवृत्तिरिति भावः। शुभवासनानामेवेति। एवकारेणाऽशुभवासनानां व्यवच्छेदः। नाऽशुभवासनानामिति यावत्। औदासीन्यनुतेत्वा। तस्माज्जीवन्मुक्तस्य यथेष्टाचरणं नास्तीति भावः।

ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतरः" ॥ इति ॥

तदानीममानित्वादीनिज्ञानसाधनानि अद्वेष्टृत्वादयश्चालंकारवदनुवर्त्तन्ते । तदुक्तं—

"उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः ॥
अयत्नतो भवन्त्यस्य न तु साधनरूपिणः" ॥ इति ॥

किं बहुना अयं देहयात्रामात्रार्थमिच्छानिच्छा परेच्छा

दूसरी बात यह है कि जो जीवन्मुक्त पुरुष अपने ब्रह्मवित्त्व को अर्थात् "मैं आत्मवेत्ता हूँ" इस अभिमान को छोड़ देता है वही आत्मज्ञ है दूसरा नहीं है।

१—'तदानीम्' अर्थात् जीवन्मुक्त अवस्था में अमानित्व-अदम्भित्व आदि ज्ञान के साधन, तथा अद्वेष्टृत्व आदि सद्गुण अलङ्कार के सदृश जीवनन्मुक्त के पीछे-पीछे चलते हैं। प्रमाण भी है कि—"उत्पन्न हो गया है आत्मावबोध जिसको ऐसे पुरुष के पीछे-पीछे अद्वेष्टृत्व आदि गुण चला करते हैं। और ये अद्वेष्टृत्व आदि गुण बिना प्रयत्न के ही इस पुरुष को प्राप्त हो जाते हैं परन्तु वे उसके ज्ञान के साधनरूपी नहीं हैं।"

---

सतत्वं याथात्म्यम्। ब्रह्मवित्त्वमिति। अयमुत्तरार्धभागः। पूर्वार्द्धस्तु 'योवेदाऽलुप्तऽदृष्टिमात्मनोऽकर्तृतां तथेति।

अयमर्थः—ब्रह्मवित्त्वं मुक्त्वा "ब्रह्मविदस्मीत्यभिमानं त्यक्त्वा यथा श्रुत्युक्तमात्मनोऽलुप्तदृष्टत्वं तथाऽ कर्तृतां च योवेद स आत्मज्ञः, न चेतर इति। अमानित्वादीनामपि अविद्याकार्यत्वेपि न तेषां निवृत्तिशास्त्राऽविरोधादित्याह। तदानीमिति। जीवन्मुक्तावस्थायामित्यर्थः। उत्पन्नेति। अस्य जीवन्मुक्तस्याऽद्वेष्टृत्वादयोगुणा अप्रयत्नेन स्वत एव भवन्ति न तु साधनरूपिण इति। ते साधनरूपा न भवन्तीत्यर्थः। तत्र हेतुमाह। उत्पन्नेति। उत्पन्न आत्मावबोधो यस्य तस्य ते गुणा लक्षणत्वेनैव भवन्तीत्यर्थः। इयं जीवन्मुक्तिस्तत्वज्ञानाऽभ्यासाद् वासनाक्षयाऽभ्यासाद् मनोनाशाभ्यासाद् भवति।

प्रापितानि सुखदुःखलक्षणान्यारब्ध फलान्यनुभवन्नन्तः करणा-भासादीनामवभासकः सन् तदवसाने प्रत्यगानन्दपरब्रह्मणि प्राणे लीने सति अज्ञानतत्कार्यसंस्काराणामपि विनाशात् परमकैवल्यमानन्दैकरसमखिलभेद प्रतिभासरहितमखण्डं

इस विषय में बहुत कथन व्यर्थ है क्योंकि जीवन्मुक्त पुरुष अपनी शरीर सम्बन्धी यात्रा मात्र के निर्वाह लिये इच्छा-अनिच्छा-परेच्छा इन तीन प्रकार की इच्छाओं के आधार पर प्रारब्ध कर्मों से उत्पन्न हुये सुख-दुःख स्वरूप फलों का अनुभव करता हुआ तथा अन्तःकरण ( साक्षी चैतन्य स्वरूप बुद्धि ) आदि का अवभासक होता हुआ अन्त में सच्चिदानन्द स्वरूप परब्रह्म में प्राणवायु के लीन हो जाने पर अज्ञान, एवं अज्ञान के कार्य संस्कारों का विनाश हो जाने से

---

इदानीं जीवन्मुक्तस्य विदेहमुक्तिं दर्शयति। किं बहुनेति। अलं बहुनेत्यर्थः। अयं जीवन्मुक्तः। देहयात्रा देहस्थितिः। तन्मात्रार्थम्, न तु इन्द्रियप्रीत्यर्थम्। सुखदुःखलक्षणानि सुखदुःखसाधनानि। आरब्ध-फलानि। भोग्यानि। अनुभवन् असंगततया भुञ्जानः। अन्तःकरणा-भासादीनां। विषयाकारवृत्तीनां अवभासकः साक्षितयाऽवभासकः सन्। तदवसाने। प्रारब्धक्षये। न तस्येति। तस्य प्राणानागादयो नोत्क्रामन्ति न गच्छन्ति कामाऽभावेन कर्माभावे सति गमनकारणाभावाद् यथा अज्ञानिनः स्वकर्मफलोपभोगाय वर्तमानशरीरारम्भके प्रारब्धे क्षीणे प्राणा उत्क्रामन्ति तथा भोगेन प्रारब्धस्य नष्टत्वाद् ज्ञानेन संचितकर्मणां नाशादागामिकर्मणोऽभावाद् ज्ञानोत्पत्तित एवाऽज्ञानस्य नष्टत्वाज्जन्म-कारणाभावात्प्राणानोत्क्रामन्तीत्यर्थः। तर्हि कुत्र तिष्ठन्तीत्याह। तत्रेति। किन्तु अत्रैव परेब्रह्मणि एकतां गतेऽस्मिन्नेव समवनीयन्ते प्रविलीयन्ते ऊर्मय इव समुद्रे। विमुक्तश्चेति। मुक्तरूपोपीत्यर्थः। विमुच्यते। अद्वितीयाऽऽत्मज्ञानात्परिकल्पिताऽज्ञानरूपबन्धरहितोभवतीत्यर्थः।

ब्रह्मावतिष्ठते । "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते" विमुक्तश्च विमुच्यते" इत्येवमादिश्रुतेः ॥

इति श्री मत्परमहंस परिव्राजकाचार्य सदानन्द विरचितो वेदान्तसारः समाप्तः ।

परमकैवल्यरूप आनन्दैकरसस्वरूप समस्त भेद प्रतिभास शून्य अखण्ड ब्रह्म में अवस्थित हो जाता है ।

इति श्री वेदान्ताचार्य शिवकुमार देव कृत वेदान्तसार भा० टी० समाप्त ।

---

आदिना "विभेदजनके ज्ञाने नाशमात्यन्तिकेगते आत्मनो ब्रह्मणोभेदमसन्तं कः करिष्यति" ब्रह्मविद् ब्रह्मैव भवतीत्यादयो ग्राह्याः ।

श्रीमता शिवदत्तेन गुरुणा करुणावशात् ।
उपदिष्टं परात्मैक्यं तत्वमावेदितं मया ।
वेदान्तसारभावार्थः स्वांशुः तिमिरापहः ।
तेन सन्तोषमाप्नोतु नीलकण्ठः सतीप्रियः ।

इति श्री गुरुशान्तदेवकृतो जयाख्या वेदान्तसार व्याख्या समाप्ता ।

# शुद्धि-पत्र

| पृष्ठ | अशुद्ध | शुद्ध | पंक्ति |
|---|---|---|---|
| १ | ग्रन्ध | ग्रन्थ | १३ |
| ६ | उपासीत | उपासीत | ८ |
| ६ | निघृत्यर्थम् | निवृत्त्यर्थम् | ८ |
| ८ | श्रवणादीनमिव | श्रवणादीनामिव | २० |
| १३ | विनेक | विवेक | ६ |
| १६ | एवमुदिशतीत्यन्वयः | एनमुपदिशतीत्यन्वयः | १६ |
| १९ | तत्रर्थोऽत्यन्ताभावः | नञर्थोऽत्यन्ताभाव | २६ |
| २० | ज्ञानीपविपयता | ज्ञानीयविपयता | २८ |
| २४ | सुमुदायः | समुदायः | २० |
| २६ | प्रतिववत्वविशिष्ट | प्रतिविम्बत्वविशिष्ट | ३ |
| ३० | तद्वद्वेश्चाभावेन | तद्वृत्तेश्चाभावेन | ११ |
| ३४ | चैतव्यम् | चैतन्यम् | १० |
| ३४ | महावाच्यस्य | महावाक्यस्य | १३ |
| ३४ | चैतन्यविष्ठम् | चैतन्यनिष्ठम् | १७ |
| ४२ | शव्दाघुपलब्धौ | शब्दाद्युपलब्धौ | ६ |
| ४२ | चक्षुरुवक | चक्षुस्त्वक् | ११ |
| ४७ | वास्सामय | वासनानय | ९ |
| ४९ | त्रिघृरणश्रति | त्रिवृत्करण श्रुति | ६ |
| ५१ | शव्दस्यशॉपलब्धि | शब्दस्पर्शोलब्धि | २ |
| ५१ | रूपाद्युपवब्धिप्रसक्त्या | रूपाद्युपलब्धि प्रसक्त्या | ३ |
| ५२ | विरोजोभिन्नतया | विराजोभिन्नतया | १२ |
| ६४ | हिरण्यगर्मेश्वर चैतन्यम् | हिरण्यगर्भेश्वर चैतन्य | ३ |
| ६६ | तादशानिष्ट साधर्नत्वस्य | तादृशानिष्ठसाधनत्वस्य | १२ |
| ६७ | तादृशलक्षणमर्मिप्रेत्य | तादृशलक्षणमभिप्रेत्य | ४ |
| ६८ | आदिवा | आदिना | १ |
| ६९ | व्यावर्त्यलाद्विशेष्यत्वम् | व्यावर्त्यत्वाद्विशेष्यत्वम् | १७ |

| | | | |
|---|---|---|---|
| ७२ | विशेत्यणीधूत | विशेषणीभूत | १२ |
| ७३ | तदस्तूरकालिक | तदुत्तरकालिक | १९ |
| ७५ | परित्यात् | परित्यागात् | १२ |
| ७९ | यल्यात् | यस्मात् | १० |
| ७६ | लत्रकत्व | लक्षकत्व | १५ |
| ८० | परमानन्दातन्ताद्वयम् | परमानन्दानन्ताद्वयम् | ७ |
| ८१ | चित्तावृत्ते | चित्तवृत्तेः | २१ |
| ८२ | निघृत्यर्थम् | निवृत्त्यर्थम् | १२ |
| ८८ | दात्तम् | जातम् | २ |
| ९० | वद्धोमुक्त | वद्धोमुक्त | ६ |
| ९३ | निघ्नचतुष्टय | विघ्नचतुष्टय | ७ |
| ९६ | वाधिर्त्यं | वाधिर्यं | १ |

श्री महालिंगदेव शास्त्री

एम. ए. वेदान्ताचार्य

———

